THE

# KASHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

( Karmakānda Section No. 12 )

NO. 118.

THE

# Gobhilagrhyasutra.

*Edited with*

AN ORIGINAL SANSKRIT COMMENTARY

*By*

M. M. Pandit Sri Mūkūnda Jhā Bakshi

PUBLISHED & SOLD BY

JAYA KRISHNADAS—HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

*BENARES.*

1936.

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशीसंस्कृतसीरिज़्पुस्तकमालायाः

११८

कर्म्मकाण्डविभागे (१२) द्वादशं पुष्पम्।



॥ श्रीः ॥

अथ-

# गोभिलगृह्यसूत्रम्-

सामवेदिनाङ्कौथुमीयानां सर्वकर्म्मसाधारणविधिपुरस्सरमग्न्याधा-
नादि-नित्यनैमित्तिक-कर्म्मणां विवाहादिसमावर्त्तनान्तानां-
नित्यकाम्यानां दशकर्म्मणाञ्च विधायकम्।

म. म. श्रीमुकुन्दशर्म्मणा

विरचितया भाष्याद्यनुसारिण्या "मृदुला"ऽऽख्यया व्याख्यया
समलङ्कृतम्।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी।

सं० १९९२ वै.

# गोभिलीयगृह्यसूत्रस्यभूमिका

समुपजोषमद्य मुद्रापयित्वा प्रकाश्यतेऽदःकौथुमीयानान्त्रैवर्णिकानां कृते महर्षिणा (पारस्कराऽपरपर्याय-कात्यायन-पित्रा) श्रीमद्गोभिलाचार्येण प्रणीतं गृह्य-(कल्प)सूत्रं, यत्र सर्वकर्मसाधारणविधिमुखेनाग्न्याधानप्रभृति-विवाहादि-दशकर्मान्तोभागः सपरिकरःप्रकाशितोऽस्ति । यद्यप्यत्र (गो० गृ०सूत्रे) अन्येऽपि-विधय उपनिबद्धा महर्षिणा किन्तु तेऽस्मिन्नलसप्राये त्रैवर्णिकसमाजे क्रमेण नामशेषतामापादिता इति पुरा महामहत्तकवीरेश्वरादिभिर्दशैव संस्कारविधयः प्रामाणिकगृह्यसूत्रानुसारिणस्सामगानां वाजसनेयिनाञ्च कृते सुस्पष्टम्पद्धतिरूपेण निम्र्माय प्रथिताः सन्ति । एष्वपि नित्या नामकरण-चूड़ाकरणो-पनयन विवाहा-एव यथाकथञ्चिदनुष्ठीयन्ते, नापरे । येषाञ्चातीवावश्यकत्वं स्मृतिशास्त्रेषूपवर्णितमस्ति ।

तथाहि-संस्काराएवात्रखलु सर्वेषां स्वरूपप्रतिपादका भवन्ति । यानन्तरा अचेतनाअपि व्यवहार्यो न भवन्ति किमुतचेतनाः । मानुषादिशरीराणि हि शुक्रशोणितसम्बन्धात्पितृमातृतोभवन्ति संस्कारैरेव पूयन्ते । येषामेवहि ते-( संस्कारा ) भवन्ति त एव संस्कारोत्कर्षक्रमेण जात्युत्कर्षं भजन्ते । येषाञ्चते न कथञ्चिदपि सन्ति त एवासंस्कृतजातयोऽस्पृश्या अच्छोपाश्चोच्यन्ते ।

तथाचाहस्म भगवान्मनुः—"वैदिकैः कर्म्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्य्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥"

इति । निषेकादिः गर्भाधानादिः । प्रेत्य-परलोके । इह-अस्मिँल्लोके ।

तथा-"गार्भैर्होमैर्जातकर्म्म-चौल-मौञ्जीनिबन्धनैः ।
बैजिकङ्गार्भिकञ्चैनोद्विजानामपमृज्यते ॥"

इति । गार्भ्भैः-गर्भसंस्कारार्थैः । होमशब्दोऽत्र जहदजहल्लक्षणया कर्मविशेषोपलक्षकः ।तेन गर्भाधानादेः परिग्रहः। बैजिकं-शुक्रश्लेषजम् । गार्भिकं-गर्भाशयस्थशोणितसम्बन्धजम् । एनः पापम् । अत्र यद्यपि पापक्षयरूपफलदर्शनात्सर्वेषां संस्काराणां काम्यत्वमेवायाति । तथापि चूड़ाकरणं नित्यम् । आवश्यक(१)शिखाधारणार्थत्वात् । नामकरणमपि नित्यम् आवश्यकाभिवादनादिकर्म्मार्थत्वात्(२)। अत एव यथोचितकालाननुष्ठिते नामकरण-चूड़ाकरण-कर्म्मणी उपनयनाव्यवहितपूर्वकालेऽनुतिष्ठन्ति शिष्टाः। उपनयनमपि तथा (नित्यम्)

---

( १ )"विशिखोव्युपवीतश्च यत्करोति न तत्कृतम्" इति कात्यायनवचनात् ॥

( २ )"अभिवादात्परं विप्रो ज्यायांसमभिवादयन् । असौ नामाहमस्मीति स्वंनाम परिकीर्त्तयेत" इति स्मरणात् । विप्र इत्युपलक्षणम् ।

"अतऊर्ध्वम्पतन्त्येते सर्वकर्मबहिष्कृताः"

इति याज्ञवल्क्येन गौणकालपर्यन्तमप्यनुपनीतेषु पातित्याभिधानात्। विवाहोऽपि नित्यः । आवश्यक-सत्प्रजोत्पादनार्थत्वात् ।

"तस्मात्सर्वप्रयत्नेन कर्त्तव्योदारसंग्रहः"

इति देवलवचनात् । "दारान्सर्वप्रयत्नेन विशुद्धानुद्वहेत्ततः"

इति कश्यपवचनाच्च । गर्भाधानादि तु न तथा । अतएवानावश्यकत्वान्नानुतिष्ठन्ति बहव इति मुरारिमिश्रादयः । अत्र गर्भाधानं क्षेत्रसंस्कारद्वारा-अपत्यसंस्कारकम् । पात्रसंस्कारस्य प्रक्षालनादेस्तत्रस्थजलादिसंस्कारकत्ववत् । पुंसवन-सीमन्तोन्नयने अपि तथा । स च क्षेत्रसंस्कारः प्रथमगर्भएव-संपन्नश्चेन्नैतेषान्त्रयाणां प्रतिगर्भमावृत्तिः । आरम्भणीयान्यायात् ।

"सकृच्चसंस्कृता नारी सर्वगर्भेषु संस्कृता ।
यंयंगर्भं प्रसूयन्ते स सर्वः संस्कृतोभवेत्"

इति हरीतवचनाच्च । पत्नीभेदे तु भवत्येव त्रयाणामावृत्तिः । "प्रधानावृत्तौ गुणावृत्तिरि"-तिन्यायात् । जातकर्मादिकन्तु न स्त्रीद्वाराऽपत्यसंस्कारकमिति न तत्प्रत्यपत्यमावर्त्तते । अत्र याज्ञवल्क्यः—

"ब्रह्म-क्षत्रिय-विट्-शूद्रा वर्णास्त्वाद्यास्त्रयोद्विजाः ।
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः"
मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् ।
ब्राह्मण-क्षत्रिय-विशस्तस्मादेते द्विजाः स्मृताः" " इति ।

इमे च संस्काराः पुंसामिव स्त्रीणामपि चातुर्वर्ण्येषु नियमिता महर्षिभिः। केवलमेषु विवाह एव समन्त्रकोऽन्येसंस्कारा अमन्त्रका एव भवन्तीति—

"तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ।

इति स्मृत्योक्तम् । तूष्णीम्-अमन्त्रिकाः। एता-जातकर्मादिकाः । यत्त्वत्र "निषेकाद्या" इति मुरारिमिश्रैरुक्तन्तदयुक्तम् । जन्मतः पूर्वं स्त्रीत्वनिर्णयासम्भवात् ।

मनुः—"अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।
संस्कारार्थं शरीरस्य यथाकालंयथाक्रमम् ॥
वैवाहिकोविधिः स्त्रीणामौपनायनिकःस्मृतः ।
पतिसेवा गुरौ वासोगृहार्थोऽग्निपरिक्रिया" ॥

इति । औपनायनिकः । उपनयनकार्य—(प्रायत्य-) कारी । स्त्रीणामुपनयस्थाने विवाहएवेति यावत्। गुरुशुश्रूषणस्थाने-पतिसेवा । अग्निपरिचरणस्थाने गृहकार्यम् । एतेसंस्काराः शूद्राणाममन्त्रका भवन्ति । तथा च यमः

"शूद्रोऽप्येवं विधः कार्यौविनामन्त्रेण संस्कृतः ।
न केन चित्समसृजच्छन्दसा तं प्रजापतिः ॥"

इति । एवंविधोऽदुष्टकर्म्मा । यथोदितकर्मा च । "अशूद्राणामदुष्टकर्म्मणामि"-ति आपस्तम्बेनोपनयने शूद्रपर्युदासात्तस्यामन्त्रकमप्युपनयनं निषिद्धम् । अत एव—

"तस्मादस्याधिकारोस्ति न वेदेषु न च स्मृतौ"

इति तस्य वेदाद्यध्ययननिषेधः ।

तथा-"विवाहमात्रस्कारं शूद्रोऽपि लभतां सदा ।"

इत्यत्र मात्रग्रहणाद्विशेषविहितव्यतिरिक्तनिवृत्तिरितिनोक्तवचनविरोधः । इदंवाक्यं विवाहे कन्यादानादिवाक्यसम्बन्धोभवति । संस्कारान्तरेषु च लौकिकवैदिक-सर्वविधवाक्यनिवृत्तिरित्येतत्तात्पर्यकमित्यपरे वदन्ति ।

## अथास्य प्रकाशेन निदानम्

एकदा वर्त्तमानमिथिलेश-तातपादा रहस्येतमर्थमस्माभिः सविनयं प्रबोधिता यदेते संस्कारा नाधुना पठनपाठनक्रमेण समाहृताइति यथापुस्तकमधीतशास्त्रान्तराअपि पौरोहित्यमनुतिष्ठन्तो "यथालिखितपाठक"-तया

"गीती-शीघ्री-शिरः कम्पी यथालिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥"

इति पाणिनिशिक्षया पाठकाधमेषु परिगणिताः सन्तोयथावत्कर्म्मकारयितुमपारयन्तः पुरोहिताअपि पुरोऽहिताः प्रायोवृत्त्या सम्बोभुवति ततएष कर्म्मकाण्डग्रन्थपठनपाठनक्रमोऽभिनवोद्घाटितमुजफ्फरपुरीयधर्म्मसमाजसंस्कृतमहाविद्यालये धर्म्यइति कृत्वा स्थापितश्चेद्भविता तदा महती धर्म्मोन्नतिः ( धर्म्यकर्म्मज्ञानेन ) सम्पादिता स्यादिति ।

एवमस्मदभ्यर्थनया लुप्तप्रचारस्यास्य ( कर्मकाण्डग्रन्थपठनपाठनक्रमस्य ) सम्पाठनमुखेनराजकीयपरीक्षायामपिशास्त्रान्तरवदुपयोजयितुमावर्जितस्वान्तैरुक्तास्मत्प्रभुवरैर्म्मिथिलामहीमहेन्द्रैः श्री५मद्रमेश्वरसिंहवीरविक्रान्तैर्विहारोत्कलप्रान्तीयः सम्राड्द्वितीयप्रतिनिधिः सपुरस्कारन्तदर्थमार्थिकसाहायकदानेनानुकूलितः। ततश्चास्य श्रौत-स्मार्त्ता-गमऽऽभेदभिन्नस्य त्रिविधस्यापि कर्म्मकाण्डस्य सर्वाअपि प्रथमादिका उपाध्यन्ताः परीक्षास्तेन तत्र महाविद्यालयेकालेन,प्रवर्त्तिताः

अथ तत्रोक्तविषयाध्यापनायोक्तप्रभुवरैर-हमेव तत्र नियोजयितुमुपश्लोकितोऽथानुमतश्च "गवर्निङ्बड़ी"-समाख्यसभया समलमकार्षमुक्ताध्यापनस्थानम् । अथ गते बहुतिथे काले विहारोत्कलप्रान्तीय-"संस्कृत-कौन्भोकेसन" सभायाः सभ्येष्वन्यतमः संवृत्तः ।

अथ तत्र ( सभायां ) सभ्यैरनतिप्रचाराणां दुर्बोधानाञ्च कर्म्मकाण्डे पाठ्यग्रन्थनां ससरलव्याख्यं प्राकाश्यमभिलष्यमाणानां प्राचीनानाम्मध्ये

लाट्यायनीय-श्रौतसूत्रस्य तावज्ज्योतिष्टोमान्तभागस्य तत्प्रास्तुवन्। यत्रच पुरस्कारदानमपि यथानियमं सभायामुद्घोषितमाकर्ण्य प्रावर्त्तिषि तन्निर्माणे-ऽन्तेवसद्भिरभ्यर्थितः। सुसम्पाद्य च तां यथावकाशमग्रिमे वर्षे तस्यां (पूर्वोक्त-सभायां) समर्पितवान्। अथ यथाकालंसभ्यैः सुपरीक्षितायां तस्यां पादोनशत-मुद्राः पारितोषिकन्ततोलब्ध्वा काश्यां कृतनिवासायै दरभङ्गामहीमहेन्द्रस्य स्व-र्वासि-श्रीमल्लक्ष्मीश्वरसिंहवीरविक्रान्तस्य ज्येष्ठायै धर्म्मपत्न्यै पूर्वं द्वादशवर्षाणि यावत्संसेवितायै संक्षिप्त–तज्जीवनचरित्रवर्णनात्मकखण्डकाव्येन सह सादरं समर्पितवान्। ताञ्च काशिक-चौखम्बासंस्थानस्थित-विद्याविलासयन्त्रालयाध्यक्ष द्वारा मुद्रापयित्वा परारि प्रकाशितवानस्मि। यत्रचसर्वोऽप्यधिकारः पुनर्मुद्रापणे तस्माएव प्रत्तोऽस्ति।

अथापरंसामगानां गृह्य–(कल्प-) सूत्रमप्येतत्प्राधान्येन चन्द्रकान्तभाष्य–नारायणभाष्य–भवदेव–मुरारिमिश्र–तत्त्वकारादीनां व्याख्यानमवलम्ब्य स्वोपज्ञ व्याख्यया "मृदुलया" सह मुद्रापयितुमुपक्रान्तं प्रामाणिकैश्छन्दोगपरि शिष्ट-गृह्यासङ्ग्रहादिभिःकातीयगोभिलीयै-रन्यैरपि वचनजातै-रुपबृंहितं मिथि-लामहीमहेन्द्र-महाराजरुद्रसिंहस्य पौत्रपत्न्यै श्रीमज्जनेश्वरीदेव्यै संक्षिप्त-तज्जी-वनचरित्रवर्णनात्मकखण्डकाव्येन सह सादरं समर्पितवांस्तामथैनां तेभ्यः का-शिक-चौखम्बासंस्थानस्थित-विद्याविलस-यन्त्रालयाध्यक्षेभ्यःससर्वाधिकारं सम-र्पितवानस्मि।

अत्रास्यैव परिशिष्टरूपेण गोभिलीयं श्राद्धकल्पमपि राजकीयोक्तपरीक्षायां सन्निवेशितमिति तदपि महता यत्नेन सुसरलया दिशा भाष्याद्यनुसारिण्योक्त-व्याख्यया संवलित-मनतिविस्तृतमुक्तवैश्यवरेभ्य एव मुद्रापयितुंसमर्पितवानस्मि। यदम्यल्पीयसैवकालेनैतत्प्रकाशनानन्तरं मुद्रापयितुं प्रतिश्रुतवन्तः सन्तीति सप्रमोदम्पाठकमहाभागेभ्यआवेदयामः।

अथापरमप्येतदभ्यर्थयामहे।

"मुद्राप्रमादजं दोषं दृष्टिदोषञ्च मामकम्।
संशोध्य धीधनैरेतदुपयोज्यं स्वकर्म्मसु॥ १॥

अथ च—

गच्छतः स्खलनं क्वापि सुपथिष्वपि स्यान्नृणाम्।
हसन्त्यसावस्तत्र समादधति सज्जनाः॥ २॥

इति सहृदयोक्तमनुस्मृत्य विरमामोनिरर्थकाद्विस्तरादिति शम्॥

# अथ समर्पणम् ।

तत्रादौ कतिपये श्रीमज्जनेश्वरीकीर्त्तिश्लोकाः ।

अथ सनातनधर्म्मरिरक्षिषा-
परवशः (१)श्रुतिवर्णितसत्कथः ॥
खखवसुक्षिति (१८००)शाꣿक उश(२)त्तमो
ऽधिविधि(३)पौषसिते द्विज(४)पुङ्गवः ।

सुबुध-राज-महेश-कुलेऽ(५)मलेऽधिमिथिलञ्जनिमाप जनेश्वरः ।
नृपति(६)सूनुसुतोऽवनतप्रजोऽखिलमहीसुरपुङ्ग(७)वहृद्गतः ॥ १ ॥ २ ॥
( युग्मम् ) (८)

( १ ) श्रुतिषु जनानाङ्कर्णेषु । पक्षे वेदेषु । वर्णिता सती साध्वी कथा यस्यसः । "वेदे श्रवसि चश्रुतिः" इत्यमरः ॥

( २ ) उशत्तमः कमनीयतमः प्रकृतो जनेश्वरो-विष्णुश्च । तथाच श्रीमद्भागवते— "ऋषिभिर्याचितोभेजे नमवं पार्थिवं वपुः । दुग्धेमामोषधीर्विप्रास्तेनायं स उशत्तमः" ( १-३-३ ) इति । स प्रसिद्धः । "वश् कान्तौ" ( अ० प० ) बाहुलकात्कर्म्मणि लटः शता सम्प्रसारणञ्च ( पा० ६।१।१६ ) ततोऽतिशायने तमप् ( पा० ५।३।५५ ) ॥

( ३ ) द्वितीयायाम् । "तिथीशावह्निकौ०" इत्येवं ज्यौतिषे ।। "कः प्रजापतिरुद्दिष्टः" इत्येकाक्षरीकोषेच ॥

( ४ ) श्रोत्रिय-ब्राह्मणरूपः ।

( ५ ) सुरत्राभिपूजितेऽर्थेवर्त्तते प्रसिद्धे-शोभनेवा । बुधराजेति षष्ठीतत्पुरुषः । कर्म्मधारयश्च । तत्राद्ये श्रेष्ठार्थको राजशब्दो द्वितीये तु नृपतिर्म्मिथिलेश्वरः । समासान्तष्टच्प्रत्ययः । ( पा० ५।४।९१ ) टिलोपश्च ( पा० ६।४।१४४ ) । खण्डवलाख्यं हि तच्छ्रोत्रियकुलं लोकेऽभिपूजितं प्रसिद्धञ्च मिथिलायाम् ॥

( ६ ) महाराज-( रुद्रसिंह )-कुमार बाबूनेत्रेश्वरसिंहस्य पुत्रः ॥

( ७ ) अखिलाः समस्तायं महीसुरपुङ्गवा ब्राह्मणश्रेष्ठास्तेषां हृद्गतः प्रेयान् । "समस्तनिखिलाऽखिलानि निःशेषम्" । इति । "द्विजात्यग्रजन्मभूदेववाड़वाः । "विप्रश्च ब्राह्मणः" इति । "स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि-श्रेष्ठार्थगोचराः" इतिचामरः ॥

( ८ ) तथाचोक्तम्—

"द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः स्यात्तु विशेषकम् ।
कलापकञ्चतुर्भिः स्यात्कुलकन्तु ततः परम्" ॥

इति । अस्य वाक्यपूर्त्ताविति शेषः ॥

स पितरञ्च(१)यतिस्म पठञ्छ्रुतिन्त्वथ तदर्थसमर्थनतो(२)गुरुम् ।
तदनु(३) तत्कृतितोऽखिलबान्धवान्त्रिपुगणांश्च नयेन(४) बलेन च ॥३॥
प्रकृतितः(५) स शिविं बलतोबलं(६) वचनतोज(७)नकं नयतः (८)कविम् ।
अनुचकार चकार रिपोर्बलं निरधिकं सहसैव सदैव हि ॥ ४ ॥
व्रतपरः (९)स उशत्तम(१०)पादयोर्न्यधित सर्वकृतीर्जनताप्रियः ।
श्रितजनेषु(११)सुरद्रु(१२)रनुद्रुतोऽर्थिनिवहेन बुधैरथ साधुभिः ॥ ५ ॥
अयमुशत्तमपादसरोरुहेऽनवरतं भ्रमरायित(१३)सन्मनाः ।
पितृनिदेशत(१४) एव निजञ्जनुः सफलयन्यमियाय(१५) स विश्रुतः ॥
श्रीमत्खण्डवलाकुलाम्बुधिसमुद्भूतोयशश्शोचिषा ।
सम्राट्सूर(१६)समेधितेन सहसा लोकान्तरं भासयन् ॥

---

( १ ) "सर्वतोजयमन्विच्छेत्पुत्रादिच्छेत्पराजयम्" इति हि नीतिगीः । अन्विच्छेत् आकाङ्क्षेत् ॥

( २ ) विद्याप्रदम् । गीष्पतिं (बृहस्पतिं च) । "गुरुर्गीष्पतिपित्राद्यावि-"त्यमरः॥

( ३ ) श्रुत्यध्ययन-तदर्थावगमानन्तरं, तत्कृतितस्तदर्थानुष्ठानेन । अत्र सार्वविभक्तिकस्तसिः । ( पा० ५।४।४४ वा० ) एवमग्रिमश्लोकेऽपि बोध्यम् ॥

( ४ ) नीत्या । "अथनयोनीतिद्यूतविशेषयोरि-"ति मेदिनी ॥

( ५ ) सदयस्वभावेन । शिविं तन्नामानं राजानं भारतादिप्रसिद्धम् ।स हि शरणागतं ( स्वोत्सङ्गपतितं ) कपोतरूपिणन्धर्मं श्येनरूपादिन्द्रात्स्वमांसदानेन ररक्षेति।कथानकन्तत्र २ वर्णितम् ॥

( ६ ) बलभद्रम् ॥ ( ७ ) राजर्षिं श्रुतिप्रसिद्धम् ॥

( ८ ) भार्गवम् । ( शुक्राचार्य्यम् ) "उशनाभार्गवः कविरि-"त्यमरः ॥

( ९ ) ब्रह्मचर्य्यव्रतपरायणः ।

( १० ) उशत्तमोविष्णुरुक्तः ।

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम् ॥ १ ॥"

इतिभगवद्गीताम्नानात् ॥

( ११ ) आश्रितवर्गेषु । ( १२ ) कल्पवृक्षः । यथाकामप्रदत्वात् ॥

( १३ ) भ्रमरायितं भ्रमरवदाचरितं सद्विशुद्धम्मनो यस्य सः ॥

( १४ ) पित्राज्ञयैव । सार्वविभक्तिकस्तसिः । ( पा० ५।४।४४ वा० ) "अववादस्तु निर्देशोनिदेशः शासनञ्चसः । शिष्टिराज्ञा चे-"त्यमरः ॥

( १५ ) सङ्गतः । "इण् गतौ" ( अ० प० ) लिट् ॥

( १६ ) सम्राडेवसूरः सूर्यस्तेन ( तत्सत्कृतिद्वारा ) समेधितेन सवँर्द्धितेन यशोरूपेण शोचिषा प्रकाशेन । सहसा-अतर्कितर्य्यँथास्यात्तथा । लोकान्तरमन्यल्लोकम् । ( देशान्तरमपि ) "मयूरव्यंसकादिश्चात् ( पा० २।१।७२ ) नित्यस्तत्पुरुष इत्यन्यशब्देन विग्रहः । "अविग्रहोनित्यमासोऽस्वपदविग्रहोवे"ति व्याकृतिविदां राद्धान्तः । यद्वा लोकानामन्तरमेवान्तरमन्तरङ्गं (मनः) भासयन्दीपयन् । पक्षे आह्लादयन् । "भा-

ज्ञातीनाप्तमान्प्रजाश्च सुखयन्विद्वत्सुबद्धादरः ।
श्रीलक्ष्मीश्वरसिंहभूपतिरभूद्वैदेहभूमौ(१)शशी ॥ ६ ॥ ७ ॥
( युग्मम् )

सम्राजः (२)प्रति संसदि प्रमुखता यस्यातिशस्याऽभवत् ।
लोकोद्धारकृते, ऽनृते न हि मनः स्वप्नेऽपि, सोऽपान्निजम् ॥
पितृव्यात्मजमात्मजीकृतमुदश्चत्प्रज्ञमाज्ञाकरम् ।
विद्यासु(३)प्रवणं जनेश्वरममुं कृत्वा गतः स्वः (४)स्वयम् ॥ ८ ॥
अथ पितृकारितनगरीं "वरगोरिया"ऽऽख्यां निवासयोग्यां (५)स्वाम् ।

---

सुदीप्तौ" ( भ्वा० आ० ) ण्यन्तादत्रपरस्मैपदम् लटः शता ॥ अत्रहि "सौरम्प्रकाशमासाद्य चन्द्रः सङ्काशते दिवि"ति हि ज्यौतिषसिद्धान्तोऽनेन दर्शितः ॥ "रोचिश्शोचरुभे क्लीबे प्रकाशोद्योत आतपः" । इति । "सूरसूर्य्याऽर्य्यमाऽऽदित्यद्वादशात्मदिवाकरा" इति । "अतर्किते तु सहसा" इति । "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्यें । छिद्रात्मीयविनाऽवधिरवसरमध्येऽन्तरात्मनि चे-"तिचामरः ॥

( १ ) मिथिलायाम् ॥

( २ ) अत्र प्रतिशब्दः प्रतिनिधौ कर्म्मप्रवचनीयः । ( पा० १।४।९२ ) तद्योगे च पञ्चमी ( पा० २।१।११ ) तथा चामरः "प्रतिः प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः" इति ॥ इत्थञ्च सम्राजः प्रतिनिधेर्लार्डमहोदयस्य संसदि समितौ ( कौन्सलपदाऽभिधानायां सभायाम् ) यस्य श्री५मल्लक्ष्मीश्वरसिंह-वीरविक्रान्तस्य प्रमुखता सभ्येषु प्रथमता श्रेष्ठता वाग्मिता वा । ( प्रकृष्टं मुखं यस्य तस्यभाव इति व्युत्पत्तेः ) अतिशस्या सर्वतः प्रतिविशिष्टेति स्तोतव्या अभवत् । "शंसुस्तुतौ" अर्हार्थे क्यप् । नलोपः । "सभासमितिसंसदः" इत्यमरः । "प्रमुखः प्रथमे श्रेष्ठे" इति तु मेदिनी ॥

( ३ ) चतसृष्वान्वीक्षिक्यादिषु धर्म्मस्थापिकासु । तथाचोक्तम् "आन्वीक्षिकीत्रयीवार्त्ता दण्डनीतिश्च शाश्वती । विद्याह्येताश्चतस्रश्च धर्म्मसंस्थितिहेतवः ।" इति । तत्रान्वीक्षिकी-गौतमादिप्रणीता तर्कविद्या । तथाचामरः "आन्वीक्षकीदण्डनीतिस्तर्कविद्या-ऽर्थशास्त्रयोः" इति । त्रयी ऋग्यजुः सामेति लक्षणत्रयलक्षिता वेदाः ४ "स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी" इत्यमरेणापि लक्षणत्रयलक्षिता वेदा इत्येवमथर्वणस्यापि क्रोडीकारः क्रियते । तत्रापि हि लक्षणात्रयलक्षिता एव मन्त्रा आम्नायन्ते । वार्त्ता इतिहासपुराणादिका इति कश्चित् वृत्तिरेववार्त्तेतित्रयं, वृत्तिश्च "स्त्रियांकृषिः पाशुपाल्यंवाणिज्यञ्चेतिवृत्तयः" इत्यमरोक्ता शाश्वतीदण्डनीतिरर्थशास्त्रम् बृहस्पत्यादिप्रणीता । अर्थस्यभूम्यादेः शास्त्रमित्युक्तामरविवेके महेश्वरः प्राह ॥

( ४ ) "स्वः स्वर्गेपरलोके चे"-त्याभिधानिकाः प्राहुः । तत्र स्वर्गोनाम। सुखविशेषप्रापको देवलोकविशेषः । तथाचाहुरभियुक्ताः—

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतञ्चतत्सुखं स्वः पदास्पदम् ॥ १ ॥"

इति । तद्गमयतीतिस्वर्गः । गमेर्डः ( पा० ३।२।४८ वा० ) ॥

( ५ ) आत्मीयाम् । "स्वोज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियान्धने" इत्यमरः ॥

श्रीमत्ये-"करदेश्वर"-शुभाभिधे स्वाग्रजे (१)ददौ प्रीत्या ॥ ९ ॥
निजवासाय ततोऽन्य(२)द्गव्यूति(३)भुवं विलङ्घ्य (४)सुषमर्द्धि ।
पुष्करणीत्रयसहितं स्वारामचयाञ्चितञ्जनानन्दम् ॥
निर्म्माप्याऽत्रान्तेवसद्भिः (५)समेतान् ।
वेद-न्याय-व्याकृति-ज्यौतिष-ज्ञान् ॥
विप्रा(६)न्वृत्त्याऽऽस्थाप्य विख्यातकीर्त्तीन् ।
लेभे ख्यातिं श्रोत्रियानप्यदभ्रान् (७) ॥ १० ॥ ११ ॥ (युग्यम)
देवीपुरय्यँत्प्रवदन्ति लोका नेदीय(८)यसी यस्य नदी सुपुण्या ।
लान्ती(९)कलीयम्मलमत्रस्नातान्ददुध्रे(१०)तथाऽऽख्याङ्कमलेति(११)हृद्याम् १२
पारेऽथ तस्याः सुबुधैर्नमस्या सच्छ्रोत्रियाणां वसतिःसुखोद्या(१२) ।
"उजान"-नाम्ना, ऽतिपुनीतभूमिस्तस्यां बभूवाऽप्रतिमोगुणौघैः ॥

---

(१) अत्र "सप्तमब्राह्मणे दानम्" इतिवत्सम्प्रदानस्याधिकरणत्वविवक्षेति केचित्। वस्तुतस्तुनायं सम्प्रदानम् । ततोऽत्रसमर्पणमात्रन्ददात्यर्थः । तथाच कर्म्मद्वारा क्रियाधारेऽस्मिन्नधिकरणतैव युक्तेति बोध्यम् । अत्रकर्त्ता पूर्वतोऽनुवृत्तोजनेश्वरएव॥

(२) स्थानम् । यल्लोका देवीपुरम्प्रवन्दतीति १२ तमश्लोकोक्तम् ॥

(३) अत्रमध्यमपदलोपी समासः । गव्यूतिमिता चासौ भूरित्येवम् "गव्यूतिः स्त्रीक्रोशयुगम्" इत्यमरः ॥

(४) अतिशोभनम् "सुषमा परमा शोभे"-त्यमरः ॥ व्यधिकरणपदोऽत्र बहुव्रीहिः॥

(५) शिष्यैः । सङ्गतान् "छात्रान्तेवासिनौ शिष्ये" इत्यमरः ॥

(६) विप्रा वेदविदः । "वेदाभ्यासाच्च विप्रः स्यादि-"त्यभिधानात् । वृत्त्या-यथोचितजीविकादानेन । "वृत्तिवर्त्तनजीवने" इत्यमरः ॥

(७) बहून् । "अदभ्रं बहुलं बहु" इत्यमरः ॥ अस्यापि वृत्त्यास्थाप्येत्यनेनैवान्वयोऽपि शब्दबलात् ॥अदभ्रादिशब्दा विशेष्यनिघ्ना इति पुंस्त्वेनात्र निर्द्देशः कृतः ।

(८) अतिशयेनान्तिकस्था । ( अत्यासन्ना ) अत्रान्तिकशब्दादतिशायन ईयसुनि ( पा० ५।३।५७ ) "अन्तिकबाढयोर्न्नेदसाधौ" ( पा० ५।३।६३ ) इतिप्रकृतेर्नेदादेशे टिलोपः । ( पा० ६।४।१५५ ) ॥ उगित्त्वान्ङीप् ( पा० ४।१।६ ) ॥

(९) "ला आदाने" ( अ० प० ) ततोवर्त्तमाने ( पा० ३।२।१२३ ) लटः शता ( पा० ३।२।१२४ ) बोध्यः ।

(१०) स्नातेः कर्त्तरिलटः शता बोध्यः ।

(११) हृदयस्य प्रियामित्यर्थे ( पा० ४।४।९५ ) यति प्रकृतेर्हृदादेशः । ( पा० ६।३।५० ) टाप् ।

(१२) "उद्याने"ति गुरुमध्याक्षरोच्चारणं जनसाधारणस्य दुःखाकरमितीत्थमियं सुखोद्या भवति । तथाचेदम्प्राकृतन्नाम । अत्र "क-ग-च-ज-टड-तद-प-ब-मानां प्रायोलोपः" इतिकातीयप्राकृतसूत्रेण दलोपे यस्यस्थातेजः स्मर्यते प्राकृते, चत्वारिंशताक्षरेरेवतत् सिद्धेः प्राकृतमञ्जर्य्याम्मुम्बईमुद्रितायां स्पष्टीकृतम्भूमिकायामस्माभिः । अत्रच

सच्छ्रोत्रियोदरिहरान्वितरत्नबल्ली(१)-
भूष्योऽन्वयेन(२) ननु काश्यप, उग्र(३)मूर्त्तिः ॥
झोपा(४)भिधः श्रित(५)हरिर्विबुधाधिवासः ।
गोवर्द्धनोदिविषदर्च्चनलब्धकीर्त्तिः ॥ १३ ॥ १४ ॥ ( युग्मम् )

---

"वदः सुपि क्यप्च" ( पा० ३।१।१०६ ) इति कर्मणि क्यपि सम्प्रसारणगुणाभावौ । प्रकृत्यादित्वाच्च ( पा० २।३।१८ वा० ) तृतीया ॥ प्रकारित्वन्तृतीयार्थः ।

"प्रकृत्यादिगणाज्जाता तृतीया तु तदात्मताम् ।
अवच्छेदकताबुद्धिप्रकारित्वादि संशति ॥ १ ॥"

इतिह्युक्तेः ॥

( १ ) दरीकन्दरा "दरी तु कन्दरो वा स्त्री" इत्यमरः । तां हरन्ति निवासाय स्वीकुर्वन्तीति दरिहराः । "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" ( पा० ६।३।६३ ) इति ह्रस्वः । पर्वतकुहरवासिनः सिंहसर्पाद्यास्तैरन्वितान्यनुगतानि ( सङ्गतानि ) रत्नानि बल्योलतास्तैर्भूष्योऽलङ्काराहः । पक्षे "दरिहरै रतौली"ति तदभिजनाख्या मैथिलपञ्जीप्रसिद्धाऽस्यैव प्राकृती, तया भूष्य इत्यर्थः । "हृञ्हरणे" ( भ्वा० उ० ) हरणं प्रापणं स्वीकारस्तेयन्नाशनञ्चेति वृत्तिकृतः प्राहुः । अत्र तां हरन्तीति अर्थप्रदर्शनन्न तु विग्रहः । साधनं तु कर्म्मणः शेषत्वविवक्षायां पचाद्यचि ( पा० ३।१।१३४ ) गङ्गाधरादिवद्बोध्यम् । "भूषअलङ्कारे" ( भ्वा० चु० प० ) ततः कर्म्मणि अर्हार्थेण्यत् । ( पा० ३।१।१२४ ) ॥

( २ ) अन्वयेन काश्यप इति "गोत्रेण गार्ग्य" इति वत्प्रकृत्यादित्वा-(पा० २।३।१८ वा० ) दभेदे तृतीया धान्येन धनवानितिवत् । काश्यपगोत्र इतितदर्थः ॥ गोवर्द्धनो गिरिरप्यन्वयेन काश्यप एव । "कश्यपात्सकलं जगत्" इतिस्मरणात् । अतएव नन्वित्यवधारणार्थेऽत्र प्रयुक्तः । "सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ" इति । "प्रश्नाऽवधारणाऽनुज्ञाऽनुनयामन्त्रणे ननु" इतिचामरः ।

( ३ ) शिवमूर्त्तिः । प्रशान्तस्वभाव इतियावत् । पक्षे रौद्र-( भयानक ) मूर्त्तिः । "उग्रः कपर्दी श्रीकण्ठः ।।" इतिशिवपर्यायेऽमरः । एवम् "रौद्रंतूग्रमि"तिभीषणपर्यायेऽपि ॥

( ४ ) उपाध्यायोपनामकः । "झा" इत्यऽपभ्रंशोऽतिपरोक्षवृत्तिः । सचायं परोक्षवृत्ति-प्रत्यक्षवृत्ति-भ्यां निर्वाच्य इतिनैरुक्तसमयः ।। तथाच "उज्झाअ" "ओझा" इतिपरोक्षवृत्ती । प्रत्यक्षवृत्तिश्चोपाध्यायशब्द इति बोध्यम् ॥

( ५ ) श्रितहरिरित्यादि विशेषणत्रयं श्लिष्टम् । यथा-श्रितः सेवितोहरिर्विष्णुर्येन सः । गिरिपक्षेतुश्रित आश्रितो (न्युषितो) हरिः श्रीकृष्णोयत्रसः । श्रिताः न्युषिता हरयो यत्रसः । विशिष्टानां बुधानां पण्डितानां विबुधानान्देवानाञ्चाधिवास आश्रयः । इत्युभयत्र क्रमेणान्वितम् । यद्वा विबुधानधिवासयति प्रतिष्ठापयतीति विबुधाधिवासः । अयं हि विद्वत्प्रकाण्डं वैयाकरणआसीदिति बोध्यम् । दिविषदान्देवाना-( तत्कर्तृकेन तत्कर्मकेन वा ) अर्चनेन पूजनेन हेतुना लब्धा कीर्त्तिर्जगद्वन्द्यता ( भगवद्धस्तावलवलम्बनाश्रयजनिता) इतिगिरिपक्षे । प्रकृतपक्षे कीर्त्तितुल्या(तत्प्रतिकृतिः) श्रीमज्जनेश्वरीदेवी येन सः । अत्र पक्षे इवार्थे प्रतिकृतिरूपे विहितस्य कनः ( पा०

अथास्य महिला(१) गुणैर्बुधनुतैः प्रशस्याऽसमा ।
रसक्षितिवसुक्षमा-( १८१६ )-मित असूत शा० केऽमला ॥
इलेव(२) रवि(३)सत्तिथा-वधिसहस्यकृष्णे(४)रमाम् ।
परेशिकृपया सुतां सुसमये लसत्सद्गुणाम् ॥ १५ ॥
गते (५)बहुतिथे दिने जनपतिः (६)समुद्वाह्य(७) ताम् ।
निनाय निजमन्दिरे विविधचित्रभूषान्विते ॥
विलासबहुले (८)ततोऽभवदतीव कौतूहलम् ।
विद्वद्भिरथ दम्पती अलमकारिषातां शुभैः(१०) ॥ १६ ॥
बहुदिनानि समुष्य (११) निजालयेऽभवदमुष्य मतिः पितृसम्मतम् ।
सव(१२)मथाधिगयं चरितुं मुदा वनितया च तयाऽति समृद्धिभिः ॥ १७ ॥
परिजनाश्च समेत्य सुसङ्गताः पुरजना अपि केचन सद्धियः ।

---

५।३।९३ ) "लुम्मनुष्ये" (पा० ५।३।९८) इति लुप् बोध्यः ॥ इयं हि तस्य कीर्त्तितु स्या लोके ख्यातिकर्यभवदिति व्यक्तम् ॥

( १ ) स्त्री ( धर्मपत्नी ) "स्त्रीजोषिदबला जोषा × × × वनितामहिलातथा" इत्यमरः । महेः पूजनार्थात् ( भ्वा० प० ) कर्म्मणि इतच्प्रत्ययऔणादिकः । मह्यते पूज्यतेऽसौ गुणैरिति महिला ॥

( २ ) इला-पृथ्वी । "गौरिला कुम्भिनी क्षमा" इतिभूमिपर्यायेऽमरः । सा यथा रमां लक्ष्मीं सीतामसूत । "राघवत्वे भवेत्सीता रुक्मिणी कृष्णजन्मनि" इतिमहालक्ष्मीमुपक्रम्य विष्णुपुराणवचनात् ॥

( ३ ) सप्तम्याम् । ( ४ ) पौषकृष्णपक्षे ।

( ५ ) बहुसंख्याके । अत्र बहुशब्दोयं संख्यावाचित्वात् ( पा० १।१।२३ ) पूरणे-ततो विहिते डटि ( पा० ५।२।४ ) तिथुगागमः ( पा० ५।२।५२ ) ॥

( ६ ) जनेश्वरः ॥

( ७ ) अत्रोद्वाहस्य सम्यक्त्वं कुलगौरवात्सुमुहूर्तादिलाभाच्चेति बोध्यम् ॥
कन्या चैभिराजकुलीयैः पितृकुलादन्यत्र नीत्वा प्राय उदूह्यते ॥

( ८ ) विलसन्त्येभिरिति विलासानि प्रमोदाधायकानि ( सुखातिशयसाधनानि) वस्तूनि बहुलानि प्रचुराणि यस्मिंस्तस्मिन् । अस्य निजमन्दिर इति विशेष्यं बोध्यम् राजदन्तादित्वात् ( पा० २।२।३१ ) बहुलशब्दस्यात्र परप्रयोगः । "अदभ्रं बहुलं बहु" इत्यमरः ॥

( ९ ) उत्सवातिशयः । हर्षातिशयो वा ॥ कुले परम्परायातमङ्गलं वा । तथा चामरमेदिन्यौ "कौतूहलं कौतुकं स्यात्कुतुकञ्च कुतूहलम् ।" इति । "कौतुकन्त्वभिलाषे स्यादुत्सवे नर्म्महर्षयोः । तथा परम्परायत-मङ्गले च कुतूहले" इति ॥

( १० ) दूर्वाक्षतादिभिर्म्मन्त्रपूतैरलमकारिषातामलङ्कृतौ । कर्म्मणि लुङत्र ॥

( ११ ) संवासं विधाय । ( १२ ) यज्ञम् । "यज्ञः सवोऽध्वरोयागः" इत्यमरः ॥

सह निनाय च तान्प्रहस(१)न्स तान् धृतिमतां स्वपरेति भिदा कुतः ॥११८॥
प्रथमकल्प अनल्पविधिक्रियाः विलिखिताश्च पुरातनपद्धतौ ॥
निजपुरोहितपण्डि(२)ततोऽखिलाः सुसमपादि निजाः परका अपि ॥१९॥
तीर्थब्राह्मणसत्तमाः सुमहिताः(३)सम्भोजितास्तर्पिताः ।
दानैर्नैकविधैरनन्यसुलभैः, हृष्टा ददुश्चाशिषः ॥
ये के चाऽधिगयं श्रिता उपसृतास्ता(४)नप्यदभ्रा(५)न्मुदा ।
वस्त्रान्नासनसद्धनैः सुवचनैः सन्तोष्य प्रत्यागमत् ॥ २० ॥

इति प्रथमोविश्रमः ॥ १ ॥ ❀ ॥

---

अथ मिथिलेश्वरमहिषीचरणार्च्चनसत्कृतम्मनः प्रगुणः(६) ।
निजजनरक्षणदक्षः सौभ्रात्रेणाग्रजा(७)र्च्चने निदधौ ॥ १ ॥
निशान्तं शान्तीनां प्रसवसदनं तीव्रतपसाम् ।
निधिः सौजन्यानामविकलकलानाङ्कुलगृहम् ॥
निधानङ्कीर्त्तीनां शरणमभयन्दुःखितनृणाम् ।
जनेशोनाम्नाऽभूद्गुरुचरणनिष्ठोनर(८)पतिः ॥ २ ॥
यन्दृष्ट्वाऽपि रजस्तमः प्रकृतयः स्वाभाविकीन्दुस्त्यजाम् ।
हित्वा स्वां प्रकृतिं प्रकाममभवन्दान्ताः प्रशान्ताशयाः ॥
भावान्भूमिगतान्हठाद्विदधती स्वच्छानतुच्छानहो ।
राकाचन्द्रिरचन्द्रिका सहचरी यत्कीर्त्तिरुज्जृम्भते ॥ ३ ॥

---

( १ ) प्रहृष्टचित्तः ।
( २ ) सार्वविभक्तिकोऽत्र तृतीयान्तात्तसिः ( पा० ५।४।४४ वा० ) ॥
( ३ ) अत्यन्तं पूजिताः ।
( ४ ) श्रिता न्युषिता उपसृताः अर्थिभावेनोपेताः ॥
"सृ गतौ" ( भ्वा० प० ) क्तः कर्त्तरि ॥
( ५ ) बहून् । "अदभ्रं बहुलं बहु" इतिविशेष्यनिघ्नवर्गेऽमरः ॥
( ६ ) प्रगुण ऋजुः । "ऋजावजिह्मप्रगुणौ" इत्यमरः ॥ प्रकृष्टागुणा यस्यसः ।
( ७ ) अग्रजस्य स्वर्वासिमहाराज श्री ५ मल्लक्ष्मीश्वरसिंह-वीरविक्रान्तस्य । श्रीमदेश्वरदेश्वरसिंहस्य निजसोदर्यस्य च ॥ अयम्भावः । उक्तवीरविक्रान्ते स्वर्गतेऽशरणे इव तन्महिष्यावसुना महोदाराशयेन सर्वात्मना यावज्जीवम्परिचरिते सुबहुसमाः सुखन्तन्नवने न्यूषतुरिति ॥
( ८ ) नरपतिशब्दोऽत्र जहदजहल्लक्षणया प्रजापालकवचनः ॥

असितगरुति (१)राधे (२) राधिकेशप्रियाहे(३)।
अनलरसनवेन्दु (१९६३)प्रोन्मिते वैक्रमाब्दे ॥
सुकृतशतकपूतः पूतनारे ! मुरारे !।
व्रजनृपतिकुमारेत्यालपंस्त(४)न्मयोऽभूत् ॥ ४ ॥

अथ जनेश्वरीवर्णनम्

सीतेवातिदृढ़ा सतीव सरला गार्गीव विद्यावती।
सावित्रीव नितान्तकान्तहितकृद्भैमीव(५)धैर्यव्रता ॥
शर्म्मिष्ठेव (६)पतिप्रिया व्रजपतेः पत्नीव (७)दाक्षिण्यभूः ।
तैस्तैः श्लाघ्यगुणैर्जनेशमहिला लोकोत्तरैः पूज्यते ॥ ५ ॥
सत्याः पत्या सहैव ज्वलननिपतनं ब्रह्मचर्ये स्थितिर्वा ।
काङ्क्षन्त्या भर्त्तृलोकन्द्वयमिह गदितं पूज्यपादैर्मुनीन्द्रैः ॥
तस्मात्पत्यौ प्रयाते मधुरिपुमयतान्तत्प्रियङ्कर्तुकामा ।
वामाङ्गत्वाद्दधत्ते प्रतिपलममलब्रह्मचर्य्यव्रतानि ॥ ६ ॥
तस्याः संरक्षणे दक्षा दक्षीव पतिदेवता ।
लक्ष्मीश्वरमहीपालपत्नी सम्प्रति राजते ॥ ७ ॥
स (८) तीव्रतैकायनतत्त्वपोषकैः सतीव्रतैः कायनतत्त्वपोषकैः ।
विभाविविभ्राट्क्षितिभृत्परिग्रहो विभाति विभ्राट्क्षितिभृत्परिग्रहः ॥८॥

---

( १ ) कृष्णपक्षे ।"गरुत्पक्षच्छदाःपत्रम्" इत्यमरः । "गरुत्पक्षे तरौ छदमि"ति-श्लीबकाण्डे बोपालितः ॥

( २ ) वैशाखे । "वैशाखे माधवोराधः" इत्यमरः ॥

( ३ ) एकादशी बुधवासरे । ( ४ ) सायुज्यमोक्षं प्रतिपेदे ॥

( ५ ) भीमराजसुता दमयन्तीव । ( ६ ) ययातिपत्नी । ( ७ ) यशोदेव ।

( ८ ) औदार्यस्य सारल्यस्य वा स्थानम् । "दक्षिणे सरलोदारावि"त्यमरः । दक्षते वर्द्धते ऋज्वाशयत्वादिति दक्षिण इत्यमरविवेके महेश्वरः प्राह । तथाच "दक्ष-वृद्धौ शीघ्रार्थे च ( भ्वा० आ० ) तत इनन् ( उ० २।५३ ) ॥

( ९ ) स प्रसिद्धः । क्षितिभृतोमहीपालस्योक्तपूर्वश्रीमल्लक्ष्मीश्वरसिंहवीरविक्रा-न्तस्य परिग्रहोधर्म्मपत्नी । "पत्नी परिजनादानमूलशापाः परिग्रहः" इत्यमरः । सती व्रतैर्विभाति । कथम्भूतैः ? तीव्रतैकायनतत्त्वपोषकैः । व्रतानि हि त्रिविधानि मृदु-मध्य-तीव्राणि । तत्र तीव्रताया यदेकमसाधारणमयनंवर्त्म ( मार्गः ) तस्य यत्तत्त्वन्त-त्पोषकैः । "अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः" इत्यमरः । एवं कायनतत्त्व-पोषकैः । देहक्रृजुतापादकैः । कठिनैरित्यर्थः ॥ कथम्भूतः क्षितिभृत्परिग्रहः ? विभा... ग्रहः । विशिष्टाभिर्भाभिरतिविभ्राड्यः क्षितिभृद्धिमगिरिः । तस्येव परिग्रहो देहो यस्य सः । "परिग्रहः कलत्रे च" इत्यजयकोशे चादेहोऽपिसंगृह्यतेपूर्णैः । स हि परिगृह्यते ( ध्रियते ) त्वगादि सप्तधातुभिरिति ॥

यस्या यशश्चन्द्रिकया सितीकृते ऽवनीतले हंससमाश्चकासिरे ।
काका अपि, प्रार्थितदानगौरवाद्यया जिता कल्पलता, तया(१)समम् ॥
देवीपुराख्ये निजभर्तृनिर्मिते स्थाने वसन्ती कमलातटे शुभे ।
अर्थिव्रजान्संस्तुत(२)दानवारिणा सन्तर्पयन्ती न्यवसत्समाः(३)सुखम् ॥
॥९॥१०॥ ( युग्मम् )

इति द्वितीयो विश्रमः ॥ २ ॥❀॥

---

अथ रत्नाब्धिवसुक्ष्मा (१८२९) मिते शकाब्दे समं महाराज्या ।
अधिमुद्ग(४)लपुरपरिसरममरधुनीं स्नातुमाप्तजनभृत्यैः ॥
निरगान्न्यवसच्चोर्ज्जादिकपुरुफलदे सुमासि सा (५)देवी ।
सुखमब्दककल्पमनघा भागवतं शृण्वती सुधीमुखतः ॥ १ ॥ २ ॥ (युग्मम्)
अधिवसन्तमुसत्तम(७)सेवकैः सुरधुनीपुलिने कृतके(६)तनैः ।
हरिसमर्चनयैधितमानसैरलमकारिषत (८)प्रतिमा हरेः ॥ ३ ॥
तदनु तैर्बहुवाद्यपुरस्सरं भगवतः प्रतिमा भ्रमणच्छलात् ।
सममनायिषताप्तजनेश्वरीभवनसन्निधिमाशु जयस्वनैः ॥ ४ ॥
श्रुतिसुखं जयशब्दममुं सती भगवतः (९)सहसा ननु शृण्वती ।
प्रणतवत्सलदर्शनलालसाऽभवदसौ कृति(१०)बुद्धिरथार्थिताः ॥
परिजनैस्त उपानयनो(११)न्मुखाः सपदि तत्साविधे समकालयन् ।

---

( १ ) तया श्रीमल्लक्ष्मीश्वरमहीपालपत्न्या श्री५मल्लक्ष्मीवतीदेव्या । समं सह । "साकं सत्रा समं सह" इत्यमरः ॥

( २ ) सम्यक्स्तुतेनार्थिनिवहैः । परिचितेन वा तेषाम् । "संस्तवः स्यात्परिचयः" इत्यमरः ॥

( ३ ) बहुवर्षाणि । अत्र समाश्च समाश्च समाश्चेत्येकशेषोबोध्यः ॥ "हायनोऽस्त्री शरत्समाः" इत्यमरः ॥ ( ४ ) मुङ्गेरनगरोपान्ते । "कष्टहरणी"समाख्ये घट्टे ॥

( ५ ) जनेश्वरी ॥ ( ६ ) श्रीमद्भगवदाराधकैर्म्माधवदासप्रमुखैः ॥

( ७ ) श्रीमद्गङ्गातटे कृताऽऽवासैः ॥

( ८ ) अलङ्कृताः । पुष्पाभरणादिभिः सुसज्जिता इतियावत ॥

( ९ ) अतर्कितर्य्यथा स्यात्तथा । "अतर्किकते तु सहसा" इत्यमरः । यद्वा हसेन हासेन सहिता "अथोहसः । हासो हास्यञ्च" इत्यमरः । प्रसन्नतमेति यावत् ॥ नन्विस्यनुज्ञायामनुनये वा "प्रश्नाऽवधारणाऽनुज्ञाऽनुनयामन्त्रणे ननु" इत्यमरः ॥

( १० ) कुशलबुद्धिः । कृतिनी बुद्धिर्यस्या इति विग्रहे पुम्बद्भावः (पा० ६।३।३४) "कृती कुशल इत्यपि" इत्यमरः ॥

( ११ ) उपानयनमुपायनमित्यनर्थान्तरम् । उपहार इति तदर्थः । तत्रोन्मुखाः साभिलाषाः । "उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः ॥ नयतेरयतेश्च तुल्यार्थतया पाणिनीयैः पाठात् ।

नयनगोचरतामुरुभक्तया समवलोकित एष जगन्मयः ॥५॥६॥ ( युग्मम् )
विश्वोद्धारकृते य एष भगवान्नानाऽभिधानान्यधात् ।
गाः पातुं वसुदेवसद्मत उपेन्द्रन्दालयम्मा(१)लयम् ॥
स श्रीमान्प्रण(२)तार्थदो बहुमतो (३) राज्ञ्याऽपि सम्पूजितो-
द्दी (४)नारादिभिरात्मभृत्यनिवहैः(५) सन्तोष्य तेऽ(६)प्यर्चिताः ॥७॥
अथ बहुम(७)तश्श्रीमान्गोपालः श्रीजनेश्वरीदेव्या ॥
सादरममुं समर्च्याऽग्रहीन्निजाराधनाय प्रतिघ(८)स्रम ॥ ८ ॥
तेऽपिभृशम्परितुष्टा यथागतं स्वाश्रमं ययुर्म्महिताः(९) ॥
सा च तदर्च्चाप्रसिता(१०)भर्तृ वियोगाधिमुज्झहौ(११) शन(१२)कैः ॥ ९ ॥
गते बहुतरे घस्रे (१३)माधवे मासि माधवः ।
दासो गोपालदेवस्य ययाचे प्रतिमां हरेः ॥ १० ॥
अथाज्ञप्तस्तया शश्वद्वासुदेवाऽभिधोनिजः ।
सेवकः कर्णकायस्थोऽपरान्तान्निरमापयत् ॥ ११ ॥
राजतीं प्रतिमां हृद्यां वितस्तिद्वयसी(१४)ञ्ज्रहे ।
धार्य्याङ्गोपालदेवस्य सभूषां(१५) सपरिच्छदाम् ॥ १२ ॥

---

(१) लक्ष्म्या निवासस्थानम् । "लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया । इन्दिरा लोकमाता मा" इत्यमरः ॥

(२) प्रणतानाञ्जनानामर्थदश्चतुर्विधपुरुषार्थदाता श्रीमानूगोपालदेवः(श्रीकृष्णः) ॥

(३) सर्वतः प्रतिविशिष्टतयाऽभिमतः । अत्रापिना जनेश्वर्या ।

(४) दीनारोनिष्कोऽशीतिगुञ्जाभिस्तुलितः सुवर्णः ॥ "असर्फी" पदाभिधानः आदिना कौशेयवस्त्राभरणादिकम् ।

(५) तद्द्वारा । (६) ते साधवोऽपि । वस्त्रादिभिः पूजिताः ॥

(७) प्रसन्नीकृतः । (८) प्रतिदिनम् "घस्रोदिनाऽहनी"एत्यमरः ॥

(९) पूजिताः "महपूजायाम्" ( भ्वा० प० ) कर्म्मणि क्तः ।

(१०) तत्परा । "तत्परे प्रसितासक्तौ" इत्यमरः ।

(११) भगवति तस्मिन्पत्युर्लयस्य पूर्वमुक्ततया तदधिगमे तद्वियोगाधिवि-निर्मुक्तियुक्तैव ॥

(१२) शनैः । अद्रुतव्यथास्यात्तथा । मन्दम्मन्दमिति यावत् । अत्र स्वार्थेऽकच् ( पा० ५।३।७१ ) प्रत्ययष्टेः प्राग्भवति ॥

(१३) मासकल्पे । घस्रे दिने "घस्रो दिनाऽहनी" इत्यमरः ।

(१४) वितस्तिप्रमाणाम् । "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" (पा० ५।२।३७) इति ऊर्ध्वमाने द्वयसच्प्रत्ययः । अत्रसूत्रे "प्रथमश्चद्वितीयश्च ऊर्ध्वमाने मतौममे"-ति महाभाष्यम् । "टिड्ढे" ( पा० ४।१।१५ ) तिङीप् ॥

(१५) भूषणवस्त्राकल्पादिसहिताम् । परितश्छाद्यत अनेनेतिसंज्ञायां घः ( पा० ३।३।११८ ) "छादेर्घेऽद्युपसर्गस्य" ( पा० ६।४।९६ ) इति छादेरुपधाया ह्रस्वः ।

अथाब्दयतृतीयिकाऽभवदमुष्य संस्थापने ।
विनिश्चिततमा समासददनेकविद्वद्व्रजः ॥
महे(१) विविधदेशतः, कृतिवरो(२)ऽत्र संकीर्त्तने ।
हरेर्ज्जगति विश्रुतः सपदि रामचन्द्रोऽभ्ययात् ॥ १३ ॥
नानाख्यानवलत्कथानकरसोत्तानाऽऽदृतानेकसद्-
गानाह्लादितचेतसोऽमुत उपश्रुत्याथसङ्कीर्त्तनम् ॥
श्रीविष्णोर्यशसोनसोऽभवदुरुप्रज्ञोऽज्ञएवाऽथवा ।
योनस्याद्विवशः पशोरपि(३)मनस्तेनाहृतं व्याहृतैः(४) ॥ १४ ॥
एतस्मान्महतोमहाज्जनमनस्तोषाऽऽकरान्नाभवं-
स्तृप्ताःकेऽपि सचेतसः(५) श्रुतिसुखं श्रोतुं हरेः कीर्त्तनम् ॥
प्राप्तानाप्ततमान्समाच्चर्यदमुष्या बान्धवः श्रोत्रियो-
त्तंसः(६) श्रीगणनाथशर्म्मपदभागध्यक्षवर्य्यः कृतेः ॥ १५ ॥
काशीतोऽभ्यागतस्य प्रथितगुणगणस्याच्चर्चने रामचन्द्र-
स्यासन्त(७)स्याऽतिथेयी(८)करणपटुरिति प्रेरितोऽध्यक्षवर्यैः ॥
सर्वं सम्पन्नतामैत्प्रचुरधनलसद्वस्त्रताम्बूल(९)पूगैः ।
सम्प्राप्तानां विदायोऽभवदतिसुखदोमानदः प्रेक्षकाणा(१०)म् ॥ १६ ॥
तदादिप्रत्यब्दमसौ जनप्रियः(११) सङ्कीर्त्तनाचार्यवरः समासदत् ।
नभःसिते(१२)विश्व(१३)तिथौ महे हरेर्हिन्दोलके श्रीमिथिलेशिका(१४)ज्ञया १७

---

(१) उत्सवे । "महउद्धवउत्सवः" इत्यमरः ॥

(२) अतिकुशलः । बुद्धिमत्तमोविद्वत्तमो वा "कृतीकुशल इत्यपि" इति । "धीमान् सूरिः कृती कृष्टिर्लब्धवर्णोविचक्षणः" इति चामरः ॥ अत्राभ्यगादित्येवमन्वयः ॥ (३) पशुरत्र बाहीकः ॥

(४) निजमधुरवचनैः । "व्याहारउक्तिर्लपितं भाषितं वचनं वचः" इत्यमरः ॥

(५) सहृदयाः ॥

(६) उत्तंसःशिरोभूषणम् । "पुंस्युत्तंसावतंसोद्वौ कर्णपूरे च शेखरे" इत्यमरः ॥

(७) प्रसिद्धस्य । अतएवात्र न यच्छब्दाऽपेक्षाऽपि । "प्राक्रान्तप्रसिद्धानुभूतार्थकस्तच्छब्दोयच्छब्दोपादानन्नापेक्षते" इति मम्मटोक्तेः ।

(८) आतिथ्यम् । अतिथौ साधुरित्यर्थे ढञ् ( पा० ४।४।१०४ ) ढस्येयादेशे ( पा० ७।१।२ ) ङीप् "क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्रसाधुनि" इत्यमरः ।

(९) पूगः क्रमुकः । "सुपारि" पदेनप्रसिद्धः । "पूगस्तु क्रमुकेवृन्दे फलसारेऽभिधेयवत्" इति मेदिनी ॥

(१०) प्रेक्षकाणामतिसुखद इत्यन्वयः । मानदोविदाय इति च ।

(११) श्रीरामचन्द्रकीर्त्तनाचार्यः ॥

(१२) श्रावणशुक्ले ।"नभः खंश्रावणोनभाः" इत्यमरः "अवदातः सितोगौर" इति च ॥ (१३) एकादश्याम् ॥ (१४) श्रीमल्लक्ष्मीवतीमहाराज्ञ्याज्ञया ॥

एवमसौ सितविमलां कीर्त्तिपटीन्द्रा(१)ग्दिगङ्गनाङ्गानाम् ।
आवृतयेऽदान्मत्वा श्रीमद्गोपालमेव हितमनघा(२) ॥ १८
पूजाभङ्गरुषा मघोनि परुषा धारास्त्यजत्यम्बरात् ।
योहस्तेन जुगोप गोपवसतीरुद्धृत्य गोवर्द्धनम् ॥
तद्गोपालमनाथनाथमतुलप्रेम्णा पतिन्धिन्वती(३) ।
तत्सेवाविवशा जनेश्वरवधूर्म्मीरेव (४) व्यद्योतत ॥ १९ ॥

इति तृतीयोविश्रमः ॥ ३ ॥ ❀ ॥

अथ बहुकाले ऽतीते विज्ञैषा श्रीजनेश्वरी देवी ।
सार्द्धन्निजरक्षित्र्या लक्ष्मीवत्या महाराज्ञ्या ॥
श्रीमत्या, तत्स्थान(५)न्त्यक्त्वाऽगाच्छङ्करम्पुरं स्वीयम् ।
राज्यं, तत्र प्रजानामपचिति(६)मुरुमाससाद सह भृत्यैः ॥ १ ॥ ( युग्मम् )
तल्लब्धैर्द्धननिवहैर्दानन्ददतो द्विजेषु बहु नित्यम् ।
सुखमुषती शुभ(७)पर्वण्युपगङ्गाकौशिकि प्रतस्थे ऽसौ ॥ ३ ॥
आर्द्धोदये सुभृत्यैराराध्यत(८)मान्विता वटेशाख्यम् ॥
शिवमानर्च्च स्नाताऽऽगता पुना राज(९)मन्दिरं स्वीयम् ॥ ४ ॥
अधिमार्गं (१०)शिवमनघा श्रीसिंहेश्वरशुभाभिधं भक्त्या ।
नैकविधैरुपहारैरपूजयत्सार्द्धमार्य्यया(११) निभृतम्(१२) ॥ ५ ॥

---

( १ ) द्राक्-झटिति ( शीघ्रम् ) उत्साहातिरेकवशादितिभावः । अत्रसम्प्रदान-न्दिगङ्गनाएव धर्म्मिपारतन्त्र्यात् । "द्राङ्मङ्क्षु सपदि द्रुते" इत्यमरः॥ ता (दिगङ्गना) हि गोपालदेवस्यपत्न्यस्तस्य दिक्पतित्वेनाम्नानात् ॥ (१०)निष्कल्मषा । तथाच त-त्प्रीतय एव सर्वमेतत्प्रत्तमनुष्ठितञ्चानयेतिज्ञेयंविज्ञैः ।

( २ ) इन्द्रे । "इन्द्रोमरुत्वान्मघवा" इत्यमरः ॥

( ३ ) मीरा नाम्नी भारतवर्षप्रसिद्धा हरावनन्यभक्तिभावभरिता पतिधिया त-स्मिन्नितान्तमनुरक्ता पुराऽभवदिति जनश्रुतिर्बरीवर्त्ति ॥

( ४ ) प्रीणयन्ती । "धिविः प्रीणनार्थः" ( भ्वा० प० ) ततोलटः शतरि ङीप् ॥ अत्र "धिन्विकृण्व्योरच" ( पा० ३।१।८० ) इति शपोऽपवादः श्नुप्रत्ययः ॥

( ५ ) देवीपुरमुक्तपूर्वम् ॥

( ६ ) पूजाम् । उपायनमिति यावत् ॥ "पूजानमस्याऽपचितिरि"त्यमरः ॥

( ७ ) सूर्य्यग्रहणे अर्द्धोदये च ॥

( ८ ) श्रीमत्या लक्ष्मीवतीदेव्याऽन्विता तत्सहभूता ॥ ( ९ ) शङ्करपुरम् ।

( १० ) आगमनमार्गमध्ये । अव्ययीभावोऽत्र सप्तम्यर्थे । (पा० २।१।६) ॥

( ११ ) तया महाराज्ञ्या ॥

( १२ ) विनीतयथास्यात्तथा । "निभृतविनीतप्रश्रिताःसमाः" इत्यमरः ॥

तस्य(१)प्रसत्त्या सत्या तया(२) सहैवाऽऽगताऽथ दरभङ्गाम् ।
श्रीलक्ष्मीश्वरमहिपोषितां पुरा, स्वर्गसन्निभान्नगरीम् ॥ ६ ॥
तत्रावसत्सुखेन प्रसञ्जिता(३) धर्म्मकर्म्मसु प्रस(४)भम् ॥
गुरुसम्मितया राज्ञ्या संज्ञानमुपागताऽगता काशीम् ॥ ७ ॥
याऽऽधिमहि(५) प्रतिनाकात् (६)सर्वैं देवैः समर्चिता नितराम् ॥
शिवशूले कृतनिलया जनिविल(७)याया श्रिता पुरा पूर्वैः ॥ ८ ॥

अथ काशीवर्णनम्—

यत्राऽऽस्ते कलधौत(८)कोमलरुचिर्निर्वाणविज्ञापिका ।
श्रीविश्वेश्वरमन्दिरोपरि चमत्कुर्वत्यदभ्रा(९)ऽऽकृतिः ॥
नानोत्तुङ्गतदीयशृङ्गलसिता भूयः पताकाऽऽश्रिता ।
दू(१०)रेत्याधिगतागमार्थिनिवहैर्लोल(११)भ्यमाणाऽनिशम् (१२) ॥९॥
देवा भूमिचरा भवन्ति न हि तेऽत्रागत्य नित्यं स्थिताः ।
ये शास्त्रे कथिता गुणा(१३)ऽग्निगणिता कोटिश्च येषाम्मता ॥
संख्या, ऽसङ्ख्यमनुष्यदुर्नयकृताऽघक्षालने सत्क्षणाः(१४) ।

---

( १ ) श्री१०८ सिंहेश्वरभगवतः ॥ प्रसत्त्या प्रसादेन प्रसङ्गेनेन ॥

( २ ) महाराज्ञ्या । ( ३ ) ण्यन्तादग्रक्तः । प्रसक्तिमापादितेति तदर्थः ।

( ४ ) हठपूर्वकम् । एतच्चक्रियाविशेषणम् । "प्रसभन्तु हठार्थकम्" इत्यमरः ॥

( ५ ) पृथिव्याम् । अत्रापि विभक्त्यर्थेऽव्ययीभावः ॥ ( पा० २।१।६ ) ॥

( ६ ) स्वर्गप्रतिनिधि-( तुल्य-) भूता । प्रतिरत्र प्रतिनिधौ कर्म्मप्रवचनीयः । ( पा० १।४।९२ ) तद्योगे च पञ्चमी । ( पा० २।३।११ ) "प्रतिःप्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।" इत्यमरः ॥

( ७ ) मुक्तये। जनेर्जन्मनोविलयोयस्यामिति व्यधिकरणपदोबहुव्रीहिरिहबोध्यः॥

( ८ ) कलधौतमत्रहेम ( सुवर्णम् ) "कलधौतं रूप्यहेम्नोरि-"ति । "सुवर्णं हेमहाटकम्" इति चामरः ॥ तेन कोमला मनोज्ञा (अतिरुचिरा) रुचिः कान्तिर्यस्याः सा । "कोमलन्तु मनोज्ञं स्यादि"-ति शब्दरत्नावली ।

( ९ ) अदभ्रा नानारूपा । आकृतिरवयवसंस्थानं यस्याः सा ॥ "अदभ्रं बहुलं बहु" इत्यमरः ॥

( १० ) दूरेत्या दूरादागता येऽधिगतागमा ज्ञानशास्त्रतत्त्वास्तथाविधैरर्थिनिवहैर्याचकसमूहैर्मोक्षाऽऽकाङ्क्षिभिः।"समूहे निवहव्यूहवारसङ्घातसञ्चयाः" इत्यमरः ॥

( ११ ) भृशङ्काम्यमाना। लषतेः कान्त्यर्था (भ्वा० प०)-दूभृशार्थयङन्ताल्लटः शानच् । ( १२ ) सन्ततम् । "सन्तताऽविरताऽनिशम्" इत्यमरः ॥

( १३ ) गुणाऽधिकैरग्निभिस्त्रयस्त्रिंशता गणिता कोटिर्येषां संख्या मता सर्वैर्ज्ञाता । "मनज्ञाने" ( दि० आ० ) कर्म्मणि क्ते नलोपः ॥ त्रयस्त्रिंशत्कोटिमिता इत्यर्थः ॥

( १४ ) सर्वदाव्यापाराः सोत्सवा वा । "क्षणः पर्वोत्सवव्यापारेषुमानेऽप्यनेहसः" इति मेदिनी ॥

पूज्यन्ते विविधै(१)र्जनैः सुकृतिभिः स्वस्वाभिलष्यार्थिभिः ॥ १० ॥
भूयोयत्र मृता भवन्ति(२)न कृताघा अप्यनाथास्तथा ।
येषाङ्क्काऽपि गतिर्न्न तेऽत्र मिलितास्तोतोष्य(३)माणाः सदा ॥
श्रीमत्या शिवसेवधि(४)प्रणतहृद्दुःखापहृत्यात्मना ।
पार्वत्या हितसज्जनाघहरणेऽसंश्या(५)नमत्या भृशम् ॥ ११ ॥
नो यत्रामनुतेऽघशंसिनिवहस्यार्थे निवासांह(६)तिम् ।
श्रीमान्भैरव एष कालवपुषा सम्पूजितोमानवैः ॥
विश्वेषां नमतामघैस्तद्नुतद्विघ्नैश्च जग्धैर्म्मुहुः ।
योऽभूत्तुन्दिल एष शङ्कर(७)सुतःसोऽत्राऽनिशं राजते ॥ १२ ॥
याऽऽस्ते धन्व(८)वपुर्य्यदीयमहितो कोटी अभूतां पुरा ॥

---

(१) नानादेशोद्भवैर्नानाजातिभिश्चातुर्वर्ण्यैर्म्मनुजैः ॥

(२) भवतिरत्रोत्पत्त्यर्थः । यागात्स्वर्गोभवतीत्यत्रयथा । यत्र मृता भूयो न भवन्ति नोत्पद्यन्ते किन्तु विमुक्ता एव भवन्तीत्यर्थः ॥ अस्याविमुक्तक्षेत्राभिधानन्तु शिवाभ्यान्नित्यमधिष्ठितत्वात् ॥

(३) भृशं सन्तोषिताः । अत्र तुषेस्तुष्यर्थात ( दि० प० ) ण्यन्तार्थयङन्तात्लटः शानज्बोध्यः । अत्र कर्त्री पार्वती ( अन्नपूर्णादेवी ) ।

(४) शेवधिर्निधिः । "इच्छाशक्तिरुमाकुमारी"तिशिवसूत्रात् । शेवधिर्यथा सर्वकामप्रदस्तथेयमपि सर्वकामप्रदेतितत्तुल्या । "निधिर्ना, शेवधि, र्भेदाः पद्मशङ्खादयोनिधेरि"-त्यमरः॥ स चासौ प्रहणतहृद्दुःखापहत्यात्माचेति कर्म्मधारयोऽत्र । तत्र विधिपक्षे प्रणतानाञ्जनानां हृदां दुःखापहतौदुःखनिवारणे आत्मामनोयति षष्ठीतत्पुरुषद्वयपूर्वकोव्यधिकरणपूर्वपदो बहुव्रीहिरवगन्तव्यः ॥ पार्वतीपक्षे लिङ्गभेदेन" ( पा० ४।१।११ ) इतिङीब्निषेधोबोध्यः ।

(५) असङ्कुचितचित्तवृत्त्या । बहुव्रीहिरयम् । अत्र "श्योऽस्पर्शे" ( पा० ८।३।४१ ) इतिश्यैङो गत्यर्थात् ( भ्वा० आ० ) निष्ठा तस्यनः । संश्यानोवृश्चिक इत्यत्र यथा । शीतात्संकुञ्चित इतितदर्थः ॥

(६) निवासदानम् । "त्यागोविहापितन्दानमपवर्जनमंहतिः" इत्यमरः । नो अत्रभैरव आमनुते।समाज्ञापयति । स्वभटान्प्रत्युतनिषेधत्येवेत्यर्थः । अतएवाऽत्राघशंसिनां निवासोदुर्लभः । भवति च कथञ्चित्कालभैरव-दुण्ढिराजभगवतोः सेवया तदीयानुकम्पासम्पातादिति व्यक्तमनुपदं वक्ष्यमाणेन पद्यार्द्धेन ॥

(७) श्रीदुण्ढिराजः । देहलीविनायकाऽपरनामा पश्चिमद्वारे मात्रा स्थापितः ॥

(८) धनुराकारा । "धनुश्चापौ धन्वशरासनकोदण्डकार्मुकाः" इत्यमरः । अनेन च

"लोलार्ककेशवौ कोटी गङ्गा ज्या नगरन्धनुः ।
कलिलक्ष्यः शरोविष्णुः शिवोधन्वी पुनातुमाम्" ॥

इति प्राक्तनश्लोकार्थएवानेनोपवर्णितः ॥

लालाकों(१)ऽथ च केशवस्तदनु यज्ज्या जह्नुकन्याऽभवत् ॥
लक्ष्यश्चात्र कलिः शरोहरिरभूद्धन्वी स्वयं शङ्करः ।
सेयं सद्गुणगौरवैर्नुतवपुः सेव्या न कस्याऽस्ति वै ॥ १३ ॥
यस्या रूपमलौकिकन्दिविषदां वन्द्याऽगकन्या (२)मुदा ।
प्रेक्षन्ती स्थिरतान्दधार सरिताम्भावं जहौ सादरम् ॥
या लोकद्वयसाधनैरसमयैर्भा(३)वैर्विभान्ती जनैः ।
रुक्ता लोकगिरा बनारसपदं (४)भेजेऽसमा सा पुरी ॥ १४ ॥
तत्र वसन्त्यधिगङ्गं (५)नित्यं स्नान्ती समर्चयन्तीशम(६) ।
आश्रितविद्वद्वर्गे समये धनमर्पयन्त्यसौ व्यलसत् ॥
बहु शरदः (७)सुखमनघा तत्प्रीत्यै मामकः समारम्भः(८) ।
असकृन्निजसंरक्षणसक्षणभावाञ्चितोयतो(९) भूवम् ॥१५॥१६॥ [ युग्मम् ]

( अथास्या निर्वाणवर्णनम् )

सेयं विश्वजनीन(१०)वृत्तिरनघा प्रोद्यत्प्रतापानला ।
श्रीलक्ष्मीश्वरसिंहभूपरिवृढज्येष्ठाङ्गनासङ्गता ॥
काशीमेत्य विदुष्मतीं सुरुचिरां न्युष्यातिवेलं (११) शुचौ ।
शा०केऽग्न्यस्वहिमूर्त्तिभू-[ १८५३ ] परिमिते शुक्ले दलेऽर्के(१२)गुहे ॥१७॥

---

( १ ) शरव्यः । भेद्य इति यावत । "लक्ष्यं स्यादपदेशेऽपि शरव्योऽपि न पुंसकम्" इतिमेदिन्यां सामान्येन नपुंसकमुक्तम् । तथाचायं विशेष्यनिघ्नः । कलिर्लक्ष्य इत्यभियुक्तोक्तेः ॥

( २ ) हिमवत्सुता गङ्गा ( ३ ) भावाः पदार्थास्तैः ।

"भावः सत्तास्वभावाऽभिप्रायचेष्टात्मजन्मसु ।
क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु ॥"

इत्यादौ चेतिमेदिनी ॥

( ४ ) बनारसपदेनोभयलोकास्वाद्या रसा अत्रसततंवरीवृततीति सूच्यते ॥

( ५ ) गङ्गायाम् ॥ ( ६ ) श्रीविश्वेश्वरम् ॥

( ७ ) बहुवर्षाणि । "हायनोऽस्त्रीशरत्समाः" इतिवर्षपर्यायेऽमरः ॥

( ८ ) एतल्लघुकाव्यनिर्माणरूपः ॥

( ९ ) यतो-यस्याः सकाशात निजस्यात्मनो मम यत्संरक्षणं तत्रयः सरक्षणभावः सोत्सववता तेनाऽञ्चितः पूजितोऽभवम् । "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः ॥

( १० ) विश्वस्मै जनाय हिता वृत्तिर्यस्याः सा "आत्मन्विश्वजनभोगोत्तरपदात्खः" ( पा०५।१।९ ) इति खप्रत्ययस्तस्येनादेशः ( पा० ७।१।१ ) ॥

( ११ ) निवासं कृत्वा । अतिवेलं बहुकालम् । शुचौ आषाढे ॥

( १२ ) अग्नयस्त्रयः । असवः प्राणाः पञ्च । अहेश्शिवस्यमूर्त्तयोऽष्टौ । भूरेकेति त्रिपञ्चाशदधिकाष्टादश । अर्के-रवौ । गुहे षष्ठ्याम् ॥ "तिथीशावह्निकौ गौरी गेहोशोऽसिगुहोरवि"रिति ज्यौतिषात् ।

प्राप्याऽशेषविशेषतीर्थमहितां विश्वेशितुः प्रेयसीम् ।
तत्र(१) श्रीमणिकर्णिका(२)मविरतं गोपालदेवं पुरः ॥
पश्यन्ती पतिसद्धियाऽहि(३)कृपया सालोक्यमस्ये(४)युषी ।
पातिव्रत्यसुपालनस्य फलमैच्छ्रीमज्जनेशप्रिया ॥ १८ ॥
या नित्यव्रतकर्शिताऽपि न जहौ रुग्णाऽपि नित्यक्रियाम् ।
प्राप्तानर्थिन उत्सुकेन मनसा प्रत्यार्चिचत्सादरम् ॥
श्रीगोपीजनवल्लभं सुरगुरुं गोपालदेवं सदा ।
नानाभक्तिभरेण तोषितवती पूजाविशेषोत्सवैः ॥ १९ ॥
मन्ये दैन्यमनुस्मरन्त्यनुसवं(५) पत्युर्विना स्वात्मना ।
तत्कृत्यं प्रतिपाल्य सन्ततमसौ सद्ब्रह्मचर्यं सती ॥
युग्मद्वादशवार्षिकन्नु शुचौ(६)मासे शुचिः प्रेयसी
सार्द्धंश्रीलजनेश्वरेण शुचिना पत्या पुनः सङ्गता ॥ २१ ॥
यावच्चन्द्रदिवाकरं सुचरितं भूमौ तयोस्तिष्ठतात् ।
इत्येतन्मनसा मयाऽत्र लघुना काव्येन तद्वर्णितम् ॥
कीर्त्तिश्चाक्षरसङ्गता स्थिरतरा भूमौ भवत्यञ्जसा(७) ।
इत्यालोच्य वुधोद्घ(८)वाचमधुना लेखं निजं सहरे ॥ २२ ॥

इति चतुर्थोविश्रमः ॥ ४ ॥ ❀ ॥

[ एवमादितः श्लोकाः ७१ ]

( १ ) काश्याम् ॥ ( २ ) अविरतं सन्ततं पश्यन्ती ।

( ३ ) शिवकृपया । "अहिर्बुध्नोऽष्टमूर्त्तिश्चे-"त्यमरः ॥

( ४ ) अस्य पत्युर्जनेश्वरसिंहस्य । ईयुषो-प्राप्तवती । छान्दसोऽपि लिटः क्वसुरत्र कविसमयसिद्धः ॥

( ५ ) अनुक्षणम् ॥

( ६ ) आषाढे । शुचिः शुद्धा । "शुचिः शुद्धेऽनुपहते" इत्यमरः । "शुचिस्तथ-माषाढे" इति च ॥

( ७ ) अनायासेन ॥ "कीर्त्तिरक्षरसम्बद्धा स्थिरा भवति भूतले" इतिह्यभियुक्ताः प्राहुः ॥ ( ८ ) पण्डितप्रकाण्डानां वाचम् ॥

श्रीगणेशायनमः ।

# अथ गोभिलीयगृह्यसूत्राणि—

१ अथातोगृह्याकर्म्माण्युपदेक्ष्यामः ॥

२ यज्ञोपवीतिनाऽऽचान्तोदकेन च कृत्यम् ॥

३ उदगयने पूर्वपक्षे पुण्येऽहनि प्रागावर्त्तनादह्नः कालं विद्यात् ॥

४ यथादेशश्च ॥

५ सर्वाण्येवान्वाहार्य्यवन्ति ॥

६ अपवर्गेऽभिरूपभोजनं यथाशक्ति ॥

७ ब्रह्मचारी वेदमधीत्यान्त्यां समिधमाधास्यन् ॥

८ जायाया वा पाणिञ्जिघृक्षन् ॥

९ अनुगुप्ता अप आहृत्य प्रागुदक्प्रवणं देशं समं वा परिसमुह्योपलिप्य मध्यतः प्राचीं लेखामुल्लिख्योदीचीश्च संहतां पश्चात् । मध्ये प्राचीस्तिस्र उल्लिख्याभ्युक्षेत् ॥

१० लक्षणावृदेषा सर्वत्र ॥

११ भूर्भुवःस्वरित्यभिमुखमग्निं प्रणयन्ति ॥

१२ प्रेते वा गृहपतौ परमेष्ठिकरणम् ॥

१३ तथा तिथिनक्षत्रपर्वसमवाये ॥

१४ दर्शे वा पौर्णमासे वाऽग्निसमाधानङ्कुर्वीत ॥

१५ वैश्यकुलाद्वाऽम्बरीषाद्वाऽग्निमाहृत्याभ्यादध्यात् ॥

१६ अपि वा बहुयाजिन एवागाराद्ब्राह्मणस्य वा राजन्यस्य वा वैश्यस्य वा ॥

१७ अपिवाऽन्यं मथित्वाऽभ्यादध्यात् ॥

१८ पुण्यस्त्वेवाऽनर्धुकोभवतीति ॥

१९ यथाकामयेत तथा कुर्यात् ॥

२० स यदेवान्त्यां समिधमादधाति जायाया वा पाणिञ्जिघृक्षन् जुहोति तमभिसंयच्छेत् ॥

२१ स एवास्य गृह्योऽग्निर्भवति ॥

२२ तेन चैवास्य प्रातराहुतिर्हुता भवति ॥

२३ सायमाहुत्युपक्रम एवात ऊर्ध्वं गृह्येऽग्नौ होमोविधीयते ॥

२४ पुरा प्रादुष्करणवेलायाः सायम्प्रातरनुगुप्ता अप आहरेत्परिचरणीयाः॥

२५ अपि वा सायम् ॥

२६ अपि वा कुम्भाद्वा मणिकाद्वा गृह्णीयात् ॥

२७ पुरास्तमयादग्निं प्रादुष्कृत्यास्तमिते सायमाहुतिञ्जुहुयात् ॥
२८ पुरोदयात्प्रातः प्रादुष्कृत्योदितेऽनुदिते वा प्रातराहुतिञ्जुहुयात् ॥

इति प्रथमप्रपाठकस्य प्रथमा कण्डिका ॥ १ ॥ १ ॥ * ॥

---

## अथ द्वितीया कण्डिका—

१ यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वाऽपि वा कुशरज्जुमेव ॥
२ दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति, दक्षिणं कक्षमन्ववलम्बं भवत्येवं यज्ञोपवीती भवति ॥
३ सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे प्रतिष्ठापयति, सव्यङ्कक्षमन्ववलम्बं भवत्येवं प्राचीनावीती भवति ॥
४ पितृयज्ञेत्वेव प्राचीनावीति भवति ॥
५ उदगग्नेरुत्सृप्य प्रक्षाल्य पाणी पादौ चोपविश्य त्रिराचामेद्द्विः प्रमृजीत ॥
६ पादावभ्युक्ष्य शिरोऽभ्युक्षेत् ॥
७ इन्द्रियाण्यद्भिः संस्पृशेत् ॥
८ अक्षिणी नासिके कर्णाविति ॥
९ यद्यन्मीमांस्यं स्यात्तत्तदद्भिः संस्पृशेत् ॥
१० तत्रैतदाहुः ॥
११ नोपस्पृशेद्व्रजन् ॥
१२ न तिष्ठन् ॥
१३ न विलोकयन् ॥
१५ नाप्रणतः ॥
१६ नाङ्गुलीभिः ॥
१७ नातीर्थेन ॥
१८ न सशब्दम् ॥
१९ नानवेक्षितम् ॥
२० न वाह्यांसः ॥
२१ नान्तरीयैकदेशस्य कल्पयित्वोत्तरीयताम् ॥
२२ नोष्णाभिः ॥
२३ न सफेनाभिः ॥
२४ न च सोपानत्कः क्वचित् ॥
२५ कासक्तिकः ॥

२६ गले बद्धः ॥
२७ चरणौ न प्रसार्य्यं च ॥
२८ अन्ततः प्रत्युपस्पृश्य शुचिर्भवति ॥
२९ हृदयस्पृशस्त्वेवाप आचामेत् ॥
३० उच्छिष्टोहैवातोऽन्यथा भवति ॥
३१ अथ प्रत्युपस्पर्शनानि ॥
३२ सुप्त्वा-भुक्त्वा-क्षुत्वा-स्नात्वा-पीत्वा-विपरिधाय च-रथ्यामाक्रम्य श्मशानञ्चाचान्तः पुनराचामेत् ॥

इति प्रथम प्रपाठकस्य द्वितीया कण्डिका ॥ १ ॥ २ ॥ ❋ ॥

## अथ तृतीया कण्डिका—

१ अग्निमुपसमाधाय परिसमूह्य दक्षिणजान्वक्तो दक्षिणेनाग्निमदितेऽनुमन्यस्वेत्युदकाञ्जलिं प्रसिञ्चेत् ॥
२ अनुमतेऽनुमन्यस्वेति पश्चात् ॥
३ सरस्वत्यनुमन्यस्वेत्युत्तरतः ॥
४ देवसवितः प्रसुवेति प्रदक्षिणमग्निं पर्युक्षेत् सकृद्वा त्रिर्वा ॥
५ पर्युक्षणान्तान्व्यतिहरन्नभिपर्युक्षन्होमीयम् ॥
६ अथ हविष्यस्यान्नस्याग्नौ जुहुयात् कृतस्य वाऽकृतस्य वा ॥
७ अकृतञ्चेत्प्रक्षाल्य जुहुयात् प्रोदकङ्कृत्वा ॥
८ अथ यदि दधि-पयो-यवागूंवा, कंसेन वा चरुस्थाल्या वा ॥
९ अग्नये स्वाहेति पूर्वां, तूष्णीमेवोत्तरां मध्ये चैवापराजितायां दिशीति सायम् ॥
१० अथ प्रातः-सूर्याय स्वाहेति पूर्वां, तूष्णीमेवोत्तरां मध्ये चैवापराजितायान्दिशि ॥
११ समिधमाधायानुपर्युक्ष्य तथैवोदकाञ्जलीन्प्रसिञ्चेदन्वमंस्था इति मन्त्रविशेषः ॥
१२ प्रदक्षिणमग्निं परिक्रम्यापां शेषं निनीय पूरयित्वा चमसं प्रतिष्ठाप्य यथार्थम् ॥
१३ एवमत ऊर्ध्वङ्गृह्योऽग्नौ जुहुयाद्वा हावयेद्वाऽऽजीवितावभृथात् ॥
१४ अथाप्युदाहरन्ति ॥
१५ कामं गृह्येऽग्नौ पत्नी जुहुयात्सायं प्रातर्होमौ गृहाः पत्नी गृह्य एषोऽग्निर्भवतीति ॥

१६ निष्ठिते सायमासप्रातराशे भूतमिति प्रवाचयेत् ॥
१७ ऋतेऽभगया वाचा शुचिर्भूत्वा ॥
१८ प्रतिजपत्योमित्युच्चैस्तस्मै नमस्तन्माला इत्युपांशु ॥

इति प्र० प्र० तृतीया कण्डिका ॥ १ ॥ ३ ॥ * ॥

---

## अथ चतुर्थी कण्डिका—

१ अथ वाग्यतोबलीन्हरेत् ॥
२ भाषेतान्नसंसिद्धिमतिथिभिः कामं सम्भाषेत ॥
३ अथ हविष्यस्यान्नस्योद्धृत्य हविष्यैर्व्यञ्जनैरुपसिच्याग्नौ जुहुयात् तूष्णींपाणिनव ॥
४ प्राजापत्या पूर्वाऽऽहुतिर्भवति सौविष्टकृत्युत्तरा ॥
५ अथ बलीन्हरेत् बाह्यतोवाऽन्तर्वा सुभूमिं कृत्वा ॥
६ सकृदपोनिनीय चतुर्धा बलिं निदध्यात् सकृदन्ततः परिषिञ्चेत् ॥
७ एकैकं वाऽनुनिधानमुभयतः परिषिञ्चेत् ॥
८ स यत्प्रथमं निदधाति स पार्थिवोबलिर्भवति । अथ यद्द्वितीयं स वायव्यो यत्तृतीयं स वैश्वदेवो यच्चतुर्थं स प्राजापत्यः ॥
९ अथापरान्बलीन्हरेत् । उदधानस्य, मध्यमस्य द्वारस्याब्दैवतः प्रथमोबलिर्भवत्योषधिवनस्पतिभ्यो द्वितीय, आकाशाय तृतीयः ॥
१० अथापरं बलिं हरेत्-शयनं वाऽधिवर्च्चो वा स कामाय वा बलिर्भवति मन्यवे वा ॥
११ अथ संस्तूपं स रक्षोजनेभ्यः ।
१२ अथैतद्बलिशेषमद्भिरभ्यासिच्यापसलवि दक्षिणा निनयेत्तत् पितृभ्यो भवति ॥
१३ आसीन एवाग्नौ जुहुयात् ॥
१४ आसीनः पितृभ्यो दद्यात् यथोपपादमितरान् ॥
१५ स्वयन्त्वेवैतान्यावद्वसेद्बलीन्हरेत् ॥
१६ अपि वाऽन्योब्राह्मणः ॥
१७ दम्पती एव ॥
१८ इति गृहमेधिव्रतम् ॥
१९ स्त्री ह सायं प्रातः पुमानिति ॥
२० सर्वस्यत्वेवाऽन्नस्यैताम्बलीन्हरेत्-पित्र्यस्य वा स्वस्त्ययनस्य वाऽर्थार्थस्य वा ॥
२१ यज्ञादेव निवर्त्तते ॥

२२ यद्येकस्मिन्काले व्रीहियवौ प्रक्रियेयाताम अन्यतरस्य कृत्वा कृतं मन्येत ॥

२३ यद्येकस्मिन्काले पुनः पुनरन्नं पच्येत सकृदेवैतद्बलितन्त्रं कुर्वीत ॥

२४ यद्येकस्मिन्कुले बहुधान्नं पच्येत गृहपतिमहानसादेवैतद्बलितन्त्रं कुर्वीत ॥

२५ यस्य त्वेषामग्रतः सिद्ध्येत् । नियुक्तमग्नौ कृत्वाऽग्रं ब्राह्मणाय दत्वा भुञ्जीत ॥

२६ यस्यो जघन्यं भुञ्जीतैवेति ॥

२७ अथाप्युदाहरन्ति ॥

२८ एतस्यैव बलिहरणस्यान्ते कामं प्रब्रुवीत भवति हैवास्य ॥

२९ स्वयन्त्वेवासस्यं बलिं हरेत् । यवेभ्योऽध्याव्रीहिभ्यः, व्रीहिभ्योऽध्या· यवेभ्यः । स त्वासस्योनाम बलिर्भवति ॥

३० दीर्घायुर्हैव भवति ॥

३१ विश्राणिते फलीकरणानामाचामस्यापामिति बलिं हरेत् स रौद्रो· भवति स रौद्रोभवति ॥

इति प्रथमप्र० चतुर्थी कण्डिका ॥ १ ॥ ४ ॥ * ॥

## अथ पञ्चमी काण्डिका

१ अथ दर्शपौर्णमासयोः ॥

२ सन्ध्याम्पौर्णमासीमुपवसेत् ॥

३ उत्तरामित्येके ॥

४ अथ यदहश्चन्द्रमा न दृश्येत माममावास्याम् ॥

५ पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्याः ॥

६ आमावास्येन हविषा पूर्वपक्षमभियजते पौर्णमासेनापरपक्षम् ॥

७ यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी, यः परमः सङ्कर्षः सा अमावास्या ॥

८ यदहस्त्वेव चन्द्रमा न दृश्येत माममावास्याङ्कुर्वीत ॥

९ दृश्यमानेऽप्येकदा गताध्वा भवति ॥

१० त्रयः पौर्णमासी काला भवन्ति, सन्ध्यावाऽस्तमितोदया वोच्चैर्वा ॥

११ अथ यदहः पूर्णोभवति ॥

१२ पृथगेवैतस्य स्नानस्याध्यायो भवति मधीयीत वा, तद्विज्ञयोवा प· र्यागमयेत ॥

१३ अथ यदहरुपवसथो भवति तदहः पूर्वाह्ण एव प्रातराहुतिं हुत्वैतदग्नेः स्थण्डिलङ्गोमयेन समन्तं पर्य्युपलिम्पति ॥

१४ अथेध्मानुपकल्पयते, खादिरान्वा पालाशान्वा ॥

१५ खादिरपालाशालाभे-विभीतक-तिल्वक-बाधक-नीप-निम्ब-राजवृक्ष-शाल्मल्य-ऽरलु-दधित्थ-कोविदार-श्लेष्मातक-वर्ज्जं, सर्ववनस्पतीनामिध्मोयथार्थं स्यात् ॥

१६ विशाखानि प्रतिलूनाः कुशा बर्हिः ॥

१७ उपमूललूनाः पितृभ्यः ॥

१८ तेषामलाभे-शूक-तृण-शर-शीर्य्य-बल्वज-मुतव-नल-शुण्ठ-वर्ज्जं, सर्वतृणानि ॥

१९ आज्यं स्थालीपाकीयान्व्रीहीन् वा यवान्वा चरुस्थालीं मेक्षणं स्रुवमनुगुप्ता अप इति ।

२० यानि चानुकल्पमुदाहरिष्यामः ॥

२१ न तदहः प्रसृज्येत् ॥

२२ दूरादपि गृहानभ्येयात् ॥

२३ अबहुवादी स्यात् ।

२४ अन्यतस्तु धनं क्रीणीयान्न विक्रीणीत ॥

२५ सत्यं विवदिषेत् ।

२५ अथापराह्ण एवाप्लुत्यौपवसथिकन्दम्पती भुञ्जीयातां, यदेनयोः काम्यं स्यात् सर्पिर्मिश्रꣳस्यात्कुशलेन ॥

इति प्र-प्र-पञ्चमी कण्डिका ॥ १ ॥ ५ ॥*॥

---

## अथ षष्ठी कण्डिका—

१ मानतन्तव्योहोवाचाहुता वा एतस्य मानुष्याहुतिर्भवति य औपवसथिकन्नाश्नाति ॥

२ अनीश्वरो ह क्षोधुकोभवत्यकाम्योजनानां, पापवसीयसी हास्य प्रजा भवति ॥

३ य औपवसथिकं भुङ्क्त ईश्वरोह भवत्यक्षोधुकः काम्योजनानां वसीयसी हास्य प्रजा भवति ॥

४ तस्माद्यत्कामयेतौपवसथिकं भुञ्जीयाताम् ॥

५ अध एवैताꣳ रात्रिꣳ शयीयाताम् ॥

६ तौ खलु जाग्रन्मिश्रावेवैताꣳ रात्रिं विहरेयातामितिहासमिश्रेण वा केन चिद्वा ॥

७ जुगुप्सेयातान्त्वेवाव्रत्येभ्यः कर्म्मभ्यः ॥

८ न प्रवसन्नुपसेदित्याहुः ॥

९ पत्न्या व्रतम्भवतीति ॥

१० यथा कामयेत तथा कुर्य्यात् ॥

११ एवमेवाहिताग्नेरप्युपवसथो भवति ॥

१२ यच्चाम्नायो विदध्यात् ॥

१३ अथ पूर्वाह्ण एव प्रातराहुतिꣳ हुत्वाऽग्रेणाग्निं परिक्रम्य दक्षिणतोऽग्नेः प्रागग्रान्दर्भानास्तीर्य्य ॥

१४ तेषां पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्सव्यस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्या ब्रह्मासनात्तृणमभिसङ्गृह्य दक्षिणापरमष्टमन्देशं निरस्यति "निरस्तः परावसुरि"ति ॥

१५ अप उपस्पृश्याथ ब्रह्मासन उपविशत्या"वसोः सदने सीदामी"ति ॥

१६ अग्निमभिमुखोवाग्यतः प्राञ्जलिरास्त आकर्म्मणः पर्यवसानात् ॥

१७ भाषेत यज्ञसꣳसिद्धिम् ॥

१८ नायज्ञियां वाचं वदेत् ॥

१९ यद्ययज्ञियां वाचं वदेत् वैष्णवीमृचं यजुर्वा जपेत् ॥

२० अपि वा नमोविष्णव इति ब्रूयात् ॥

२१ यद्यु वा उभयञ्चिकीर्षेद्धौत्रञ्चैव ब्रह्मत्वञ्चैवैतेनैव कल्पेन छत्रं वोत्तरासङ्गं वोदकमण्डलं दर्भवटुं वा ब्रह्मासने निधाय तेनैव प्रत्याव्रज्याथान्यच्चेष्टेत ॥

इति प्रथमप्र० षष्ठी कण्डिका ॥ १ ॥६॥*॥

---

## अथ सप्तमी कण्डिका—

१ अथोलूखलमुशले प्रक्षाल्य शूर्पञ्च पश्चादग्नेः प्रागग्रान्दर्भानास्तीर्य्योपसादयति ॥

२ अथ हविर्निर्वपति व्रीहीन् वा यवान् वा कꣳसेन वा चरुस्थाल्या वा ॥

३ "अमुष्मै त्वा जुष्टं निर्वपामी"ति देवतानामादेशꣳसकृत् द्विस्तूष्णीम् ॥

४ अथ पश्चात्प्राङ्मुखोऽवहन्तुमुपक्रमेत, दक्षिणोत्तराभ्यां पाणिभ्याम् ॥

५ त्रिःफलीकृताꣳस्तण्डुलान् त्रिर्देवेभ्यः प्रक्षालयेदित्याहुर्द्विर्म्मनुष्येभ्यः, सकृत् पितृभ्य इति ॥

६ पवित्रान्तर्हितांस्तण्डुलानावपेत् ॥

७ कुशलश्रृतमिव स्थालीपाकꣳश्रपयेत् प्रदक्षिणमुदायुवन् ॥

८ शृतमभिघार्य्योदगुद्वास्य प्रत्यभिघारयेत् ॥

९ अग्निमुपसमाधाय कुशैः समन्तं परिस्तृणुयात् । पुरस्ताद्दक्षिणत उत्तरतः पश्चादिति ॥

१० सर्वतस्त्रिवृतं पञ्चवृतं वा ॥

११ बहुलमयुग्मसंहतम् ॥

१२ प्रागग्रैरग्रैर्मूलानिच्छादयन् ॥

१३ पश्चाद्वाऽऽस्तीर्य्य दक्षिणतः प्राञ्चं प्रकर्षति तथोत्तरेण ॥

१४ दक्षिणोत्तराण्यग्राणि कुर्यात् ॥

१५ एष परिस्तरणन्यायः सर्वेष्वेवाहुतिमत्सु ॥

१६ परिधीनप्येके कुर्वन्ति-शामीलान्पार्णान्वा ॥

१७ उत्तरतोऽपां पूर्णः स्रुवः प्रणीता ॥

१८ भावे न वा स्यादित्येके ॥

१९ बर्हिषि स्थालीपाकमासाद्येध्मनभ्याधायाज्यꣳसंस्कुरुते ॥

२० सर्पिस्तैलं दधिपयोयवागूं वा ॥

२१ तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते ॥

२२ ओषधिमन्तर्धाय च्छिनत्ति, न नखेन "पवित्रे स्थो वैष्णव्यावि"ति ॥

२३ अथैने अद्भिरनुमार्ष्टि-"विष्णोर्म्मनसा पूतेस्थ" इति ॥

२४ सम्पूयोत्पुनात्युदगग्राभ्यां पवित्राभ्याम् ॥

२५ अङ्गुष्ठाभ्याञ्चोपकनिष्ठिकाभ्याञ्चाङ्गुलिभ्यामभिसंगृह्य प्राक्शस्त्रिरुत्पुनाति-"देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोःसूर्य्यस्य रश्मिभिरि"ति सकृद्यजुषा द्विस्तूष्णीम् ॥

२६ अथैने अद्भिरभ्युदयाग्नावप्युत्सृजेत ॥

२७ अथैतदाज्यमधिश्रित्योदगुद्वासयेत् ॥

२८ एवमाज्यस्य संस्करणकल्पो भवतीति ॥

इति प्र०प्र०सप्तमी कण्डिका ॥ १ ॥ ७ ॥

## अथ-अष्टमी-कण्डिका—

१ पूर्णमाज्यमपरः स्थालीपाकः ॥

२ पर्युदय स्थालीपाक आज्य आनीय मेक्षणेनोपघातꣳहोतुमेवोपक्रमते ॥

३ युद्युवा उपस्तीर्णाभिघारितञ्जुहुयात् आज्यभागावेव प्रथमौ जुहुयात्

४ चतुर्गृहीतमाज्यं गृहीत्वा पश्चावत्तन्तु भृगूणाम् । "अग्नये स्वाहे"-त्युत्तरतः "सोमाय स्वाहे"ति दक्षिणतः प्राक्शो जुहुयात् ॥

५ अथ हविष उपस्तीर्यावद्यति ॥
६ मध्यात्पूर्वार्द्धाच्चतुरवत्तीचेद्भवति ॥
७ अभिघारयत्यवदानानि ॥
८ प्रत्यनक्त्यवदानस्थानान्ययातयामतायै ॥
९ अग्नये स्वाहेति मध्ये जुहुयात् ।
१० सकृद्वा त्रिर्वैतेन कल्पेन ॥
११ अथ स्विष्टकृत उपस्तीर्यावद्यत्युत्तरार्द्धपूर्वार्द्धात्सकृदेव भूयिष्ठमवद्य द्विरभिघारयेत् ॥
१२ यद्यु पञ्चावत्ती स्याद्द्विरुपस्तीर्य्यावदाय द्विरभिघारयेत् ॥
१३ न प्रत्यनक्त्यवदानस्थानम् यातयामतायै ॥
१४ अग्नये स्विष्टकृते स्वाहेत्युत्तरार्द्धपूर्वार्द्धे जुहुयात् ॥
१५ महाव्याहृतिभिराज्येनाभिजुहुयात ॥
१६ प्राक् स्विष्टकृत आवापः ॥
१७ गणेष्वेकं परिसमूहनमिध्मोवर्हिः पर्युक्षणमाज्यमाज्यभागौ च ॥
१८ सर्वेभ्यः समवदाय सकृदेव सौविष्टकृतं जुहोति ॥
१९ हुत्वैतन्मेक्षणमनुप्रहरेत् ॥
२० प्रक्षाल्य वैनेन (उद्धृत्य) भुञ्जीत ॥
२१ न स्रुवमनुप्रहरेदित्येक आहुः ॥
२२ आग्नेय एवानाहिताग्नेरुभयोर्दर्शपूर्णमासयोः स्थालीपाकः स्यात् ॥
२३ आग्नेयो वाऽग्नीषोमीयोवाऽऽहिताग्नेः पौर्णमास्याम् ॥
२४ ऐन्द्रोवैन्द्राग्नोवा माहेन्द्रोवाऽमावास्यायाम् ॥
२५ अपिवाऽऽहिताग्नेरप्युभयोर्दर्शपूर्णमासयोराग्नेय एव स्यात् ॥
२६ समिदाधायानुपर्युक्ष्य यज्ञवास्तु करोति ॥
२७ तत एव वर्हिषः कुशमुष्टिमादायाज्ये वा हविषि वा त्रिरवदध्याद-ग्राणि मध्यानि मूलानी "त्यक्तं रिहाणा व्यन्तु वय" इति ॥
२८ अथैनमद्भिरभ्युक्ष्याग्नावर्ध्यं जपेत् "यः पशूनामधिपतीरुद्रस्तन्तिचरो-वृषा पशूनस्माकं माहिंसीरेतदस्तु हुतन्तव स्वाहे"ति ॥
२९ एतद्यज्ञवास्त्वित्याचक्षते ॥

इति प्र०प्र० अष्टमी कण्डिका ॥ १ ॥ ८ ॥

---

## अथ–नवमी–कण्डिका—

१ अथैतद्धविरुच्छिष्टमुदगुद्वास्योद्धृत्य ब्रह्मणे प्रयच्छेत् ॥
२ तं तितर्पयिषेत् ॥

३ "ब्राह्मणस्य तृप्तिमनुतृप्यामी"ति ह यज्ञस्य वेदयन्ते ॥
४ अथ यदस्यान्यदन्नमुपसिद्धꣳ स्यात् ॥
५ अथ ब्राह्मणान्भक्तेनोपेप्सेत् ॥
६ पूर्णपात्रोदक्षिणा तं ब्रह्मणे दद्यात् ॥
७ कꣳसं चमसं वाऽन्नस्य पूरयित्वा कृतस्य वाऽकृतस्य वाऽपि वा फलानामेवैतं पूर्णपात्रमित्याचक्षते ॥
८ ब्रह्मैवैक ऋत्विक् ॥
९ पाकयज्ञेषु स्वयꣳहोता भवतीति ॥
१० पूर्णपात्रोऽवमः पाकयज्ञानां दक्षिणा ॥
११ अपरिमितम्पराद्ध्यम् ॥
१२ अपि ह सुदाः पैजवन ऐन्द्राग्नेन स्थालीपाकेनेष्ट्वा शतं सहस्राणि ददौ ॥
१३ अथ यदि गृह्योऽग्नौ सायं प्रातर्होमयोर्वा दर्शपूर्णमासयोर्वा हव्यं वा होतारं वा नाधिगच्छेत् कथं कुर्यादिति ? ॥
१४ आसायमाहुतेः प्रातराहुतिर्नात्येत्याऽऽप्रातराहुतेः सायमाहुतिरामावास्यायाः पौर्णमासं नात्येत्यापूर्णमास्या आमावास्यम् ॥
१५ एतेनैवावकाशेन हव्यं वा होतारं वा लिप्सेत् ॥
१६ अपि वा यज्ञियानामेवौषधिवनस्पतीनां फलानि वा पलाशानि वा श्रपयित्वा जुहुयात् ॥
१७ अप्य एवान्ततो जुहुयादिति ह स्माह पाकयज्ञ ऐड़ोहुतं ह्येव ॥
१८ अहुतस्य प्रायश्चित्तं भवतीति ॥
१९ नाव्रतो ब्राह्मणः स्यादिति ॥
२० अथाप्युदाहरन्ति ॥
२१ यावन्न हूयेताभोजनेनैव तावत्सन्तनुयात् ॥
२२ अथ यदाधिगच्छेत् प्रतिजुहुयात् ॥
२३ एवमस्य व्रतꣳ सन्ततं भवतीति ॥
२४ एषोऽत ऊर्ध्वꣳहविराहुतिषु न्यायः ॥
२५ मन्त्रान्ते स्वाहाकारः ॥
२६ आज्याहुतिष्वाज्यमेव सꣳस्कृत्योपघातं जुहुयात् नाज्यभागौ न स्विष्टकृत् ॥
२७ आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिर्होमः ॥
२८ यथा पाणिग्रहणे तथा चूड़ाकरणे चोपनयने गोदाने च ॥
२९ अपवृत्ते कर्म्मणि वामदेव्यगानꣳशान्त्यर्थं शान्त्यर्थम् ॥

इति प्र०प्र०नवमी कण्डिका ॥ १ ॥ ९ ॥

समाप्तश्च प्रथमः प्रपाठकः ॥*॥

## अथ द्वितीयप्रपाठके प्रथमा कण्डिका—

१ पुण्ये नक्षत्रे दारानकुर्वीत ॥

२ लक्षणप्रशस्तान्कुशलेन ॥

३ तदलाभे पिण्डान् ॥

४ वेद्याः सीताया ह्रदाद्गोष्ठाच्चतुष्पथादादेवनादादहनादीरिणात् ॥

५ सर्वेभ्यः सम्भार्य्यं नवमम् ॥

६ समान् कृतलक्षणान् ॥

७ पाणावाधाय कुमार्या उपनामये–"ऋतमेवप्रथममृतं नात्येति कश्चनर्तं इयं पृथिवी श्रिता सर्वमिदमसौ भूयादि"ति तस्या नाम गृहीत्वैषामेकं गृहाणेति ब्रूयात् ॥

८ पूर्वेषाञ्चतुर्णाङ्गृह्णन्तीमुपयच्छेत् ॥

९ सम्भार्य्यमपीत्येके ॥

१० क्लीतकैर्यवैर्म्माषैर्वाऽऽप्लुताᳪ सुहृत्सुरोत्तमेन सशरीरां त्रिर्म्मूर्धन्यभिषिञ्चेत्–"काम वेद ते नाम मदोनामासी"ति समानयामुमिति पतिनामगृह्णीयात्—स्वाहाकारान्ताभिरुपस्थमुत्तराभ्यां प्लावयेत् ।

११ ज्ञातिकर्म्मैतत ।

१२ पाणिग्रहणे पुरस्ताच्छालाया अग्निरुपसमाहितोभवति ॥

१३ अथ जन्यानामेको ध्रुवाणामपां कलशं पूरयित्वा सहोदकुम्भः प्रावृतो वाग्यतोऽग्रेणाग्निं परिक्रम्य दक्षिणत उदङ्मुखोऽवतिष्ठते ॥

१४ प्राजनेनान्यः ॥

१५ शमीपलाशमिश्रांश्च लाजांश्चतुरञ्जलिमात्रान् शूर्पेणोपसादयन्ति । पश्चादग्नेः ॥

१६ दृषत्पुत्रञ्च ॥

१७ अथ यस्याः पाणिं ग्रहीष्यन्भवति सशिरस्का साऽऽप्लुता भवति ॥

१८ अहतेन वसनेन पतिः परिदध्यात् "याअकृन्तन्" एतयर्च्चा"परिधत्त धत्त वाससे"ति च ॥

१९ प्रावृतां यज्ञोपवीतिनीमभ्युदानयन् जपेत् "सोमोऽददद्गन्धर्वायेति" ॥

२० पश्चादग्नेः संवेष्टितङ्कटमेवं जातीयं वान्यत् पदा प्रवर्तयन्तीं वाचयेत्–"प्रमे पतियानः पन्थाः कल्पतामि"ति ॥

२१ स्वयं जपेदजपन्त्यां "प्रास्या" इति ॥

२२ बर्हिषोऽन्तं कटान्तं प्रापयेत् ॥

२३ पूर्वे कटान्ते दक्षिणतः पाणिग्राहस्योपविशति ॥

२४ दक्षिणेन पाणिना दक्षिणमᳪसमन्वारब्धायाः षडाज्याहुतीर्जुहो-

ति-"अग्निरेतु प्रथम" इत्येतत्प्रभृतिभिः ॥
२५ महाव्याहृतिभिश्च पृथक् ॥
२६ समस्ताभिश्चतुर्थीम् ॥

इति द्वितीयपाठकस्य प्रथमा कण्डिका ॥ २ ॥ १ ॥

---

## अथ द्वितीया कण्डिका—

१ हुत्वोपोत्तिष्ठतः ॥
२ अनुपृष्ठं पतिः परिक्रम्य दक्षित उदङ्मुखोऽवतिष्ठते । वध्वञ्जलिं गृहीत्वा ॥
३ पूर्वा माता लाजानादाय भ्राता वा वधूमाक्रामयेदश्मानं दक्षिणेन प्रपदेन ॥
४ पाणिग्राहो जपति "इममश्मानमारोहे"ति ॥
५ सकृत्सङ्गृहीतं लाजानामञ्जलिं भ्राता वध्वञ्जलावावपति ॥
६ तं सोपस्तीर्णाभिघारितमग्नौ जुहोत्यविच्छिन्दत्यञ्जलिं "इयं नार्युपब्रूत" इति ॥
७ "अर्यमणन्नु देवं" "पूषणमि" त्युत्तरयोः ॥
८ हुते पतिर्यथेतं परिव्रज्य प्रदक्षिणमग्निं परिणयति मन्त्रवान्वा ब्राह्मणः "कन्यलापितृभ्य" इति ॥
९ परिणीता तथैवावतिष्ठते तथाऽऽक्रामति, तथा जपति तथाऽऽवपति तथा जुहोति ॥
१० एवं त्रिः ॥
११ शूर्पेण शेषमग्नावोप्य प्रागुदीचीमभ्युत्क्रामय"न्त्येकमिष" इति ॥
१२ दक्षिणेन प्रक्रम्य सव्येनानुक्रामेत् ॥
१३ "मा सव्येन दक्षिणमतिक्रामे"ति ब्रूयात् ॥
१४ ईक्षकान्प्रतिमन्त्रयेत "सुमङ्गलीरियं वधू" रिति ॥
१५ अपरेणाग्निमौदकोऽनुसंव्रज्य पाणिग्राहं मूर्द्धदेशेऽवसिञ्चति, तथेतरां "समञ्जन्त्वि"त्येतयर्चा ॥
१६ अवसिक्तायाः सव्येन पाणिनाऽञ्जलिमुपोद्गृह्य दक्षिणेन पाणिना दक्षिणं पाणिꣳ साङ्गुष्ठमुत्तानं गृहीत्वैताः षट् पाणिग्रहणीया जपति "गृभ्णामित" इति ॥
१७ समाप्तासूद्वहन्ति ॥ * ॥

इति द्वितीयप्रपाठकस्य द्वितीया कण्डिका ॥ २ ॥ २ ॥

## अथ तृतीया कण्डिका—

१ प्रागुदीच्यान्दिशि यद्ब्राह्मणकुलमभिरूपम् ।
२ तत्राग्निरुपसमाहितोभवति ॥
३ अपरेणाग्निमानडुहं रोहितञ्चर्म्म प्राग्ग्रीवमुत्तरलोमास्तीर्णम्भवति ॥
४ तस्मिन्नेनां वाग्यतामुपवेशयन्ति ॥
५ सा खल्वास्त एवानक्षत्रदर्शनात् ॥
६ प्रोक्ते नक्षत्रे षडाज्याहुतीर्जुहोति "लेखासन्धिषु"त्येतत्प्रभृतिभिः॥
७ आहुतेराहुतेस्तु सम्पातं मूर्धनि वध्वा अवनयेत् ॥
८ हुत्वोपोत्थायोपनिष्क्रम्य ध्रुवन्दर्शयति ।
९ "ध्रुवमसि ध्रुवाहम्पतिकुले भूयासममुष्यासावि"ति पतिनाम गृह्णीयादात्मनश्च ।
१० अरुन्धतीञ्च ॥
११ "रुद्धाहमस्मी"त्येवमेव ॥
१२ अथैनामनुमन्त्रयते "ध्रुवाद्यौरि"त्येतयर्चा ॥
१३ अनुमन्त्रिता गुरुं गोत्रेणाभिवादयते ॥
१४ सोऽस्या ( वाग् ) विसर्गः ॥
१५ तावुभौ तत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ सह शयीयाताम् ॥
१६ अत्रार्घ्यमित्याहुः ॥
१७ आगतेष्वित्येके ॥
१८ हविष्यमन्नं प्रथमं परिजपितं भुञ्जीत ॥
१९ श्वोभूते वा समशनीयँस्थालीपाकं कुर्वीत ॥
२० तस्य देवता अग्निः प्रजापतिर्विश्वेदेवा अनुमतिरिति ॥
२१ उद्धृत्यस्थालीपाकं व्यूह्यैकदेशं पाणिनाऽभिमृशेत् "अन्नपाशेन मणिने"ति ॥
२२ भुक्त्वोच्छिष्टं वध्वै प्रदाय यथार्थम् ॥ गौर्दक्षिणा ॥

इति द्वि० तृतीया कण्डिका ॥ १ ॥ ३ ॥ * ॥

## अथ चतुर्थी कण्डिका—

१ यानमारोहन्त्याँ "सुकिँशुकं शाल्मलिमि"त्येतामृचं जपेत् ॥
२ अध्वनि चतुष्पथान्प्रतिमन्त्रयते नदीश्च विषमाणि च महावृक्षान् श्मशानञ्च "मा विदन्न परिपन्थिन" इति ॥

३ अक्षभङ्गे नद्धविमोक्षे यानविपर्यासेऽन्यासु चापत्सु यमेवाग्निं हरन्ति तमेवोपसमाधाय व्याहृतिभिर्हुत्वाऽन्यद्द्रव्यमाहृत्य "यन्नृते चिद-भिश्रिषः" इत्याज्यशेषेणाभिव्यञ्ज्जेत् ॥

४ वामदेव्यं गीत्वाऽऽरोहेत् ॥

५ प्राप्तेषु वामदेव्यम् ॥

६ गृहागतायां पतिपुत्रशीलसम्पन्ना ब्राह्मण्योऽवरोप्यानडुहे चर्म्मणि उपवेशयन्ति "इहगावः प्रजायद्ध्वमिति ॥

७ तस्याः कुमारमुपस्थ आदध्युः ॥

८ तस्मै शकलोटानञ्जलावावपेयुः ॥

९ फलानि वा ॥

१० उत्थाप्य कुमारं ध्रुवा आज्याहुतीर्जुहोत्यष्टा "विहधृतिरि"ति ॥

११ समाप्तासु समिधमाधाय यथावयसं गुरून्गोत्रेणाभिवाद्य मथार्थम् ॥

इति द्वि० प्र० च० कण्डिका ॥ २ ॥ ४ ॥ * ॥

---

## अथ पञ्चमी कण्डिका

१ अथातश्चतुर्थीकर्म्म ॥

२ अग्निमुपसमाधाय प्रायश्चित्ताज्याहुतीर्जुहोति "अग्ने प्रायश्चित्त" इति चतुः ॥

३ अग्नेः स्थाने वायुचन्द्रसूर्य्याः ॥

४ समस्य पञ्चमीं बहुवदूह्य ॥

५ आहुतेराहुतेस्तु सम्पातमुदपात्रेऽवनयेत् ॥

६ तेनैनाᳬ सकेशनखामभ्यज्य ह्लासयित्वाऽऽप्लावयन्ति ॥

७ ऊर्ध्वन्त्रिरात्रात्सम्भव इत्येके ॥

८ यदर्त्तुमती भवत्युपरतशोणिता तदा सम्भवकालः ॥

९ दक्षिणेन पाणिनोपस्थमभिमृशेद् "विष्णुर्योनिं कल्पयत्वि"त्येतयर्चा "गर्भन्धेहि शिनीवाली" ति च ॥

१० समाप्यर्चौ सम्भवतः ॥

इतिद्वि०पञ्चमी कण्डिका ॥ २ ॥ ५ ॥

## अथ षष्ठी कण्डिका—

१ तृतीयस्य गर्भमासस्यादिसदेशे पुंᳬसवनस्य कालः ॥

२ प्रातः सशिरस्काऽऽप्लुतोदगग्रेषु दर्भेषु-, पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङ्घुपविशति ॥

३ पश्चात्पतिरवस्थाय दक्षिणेन पाणिना दक्षिणमꣳसमन्ववमृश्यान्त-
हितं नाभिदेशमभिमृशेत् । "पुमाꣳसौ मित्रावरुणावि"त्येतयर्चा ॥

४ अथ यथार्थम् ॥

५ अथाऽपरम् ॥

६ प्रागुदीच्यान्दिशि न्यग्रोधशुङ्गामुभयतः फलामस्रामामकृमिपरिसृ-
प्तां त्रिःसप्तैर्यवैर्माषैर्वा परिक्रीयोत्थापयेत् ॥

७ "यद्यसि सौमी सोमाय त्वा राज्ञे परिक्रीणामि, यद्यसि वारुणी वरु-
णायत्वा राज्ञे परिक्रीणामि, यद्यसि वसुभ्यो वसुभ्यस्त्वा परि-
क्रीणामि, यद्यसि रुद्रेभ्यो रुद्रेभ्यस्त्वा परिक्रीणामि, यद्यस्यादित्येभ्य
आदित्येभ्यस्त्वा परिक्रीणामि, यद्यसि मरुद्भ्यो मरुद्भ्यस्त्वा परि-
क्रीणामि, यद्यसि विश्वेभ्यो देवेभ्यो विश्वेभ्योदेवेभ्यस्त्वा परिक्रीणामि ॥

८ "ओषधयः! सुमनसोभूत्वाऽस्यां वीर्यं समाधत्तेयङ्कर्म्मंकरिष्यतीत्यु"
त्थाप्य तृणैः परिधायाऽऽहृत्य वैहायसीं निदधात् ॥

९ दृषदं प्रक्षाल्य ब्रह्मचारी व्रतवती वा ब्रह्मबन्धूः कुमारी वाऽप्रत्याह-
रन्ती पिनष्टि ॥

१० प्रातः सशिरस्काऽऽप्लुतोदगग्रेषु दर्भेषु, पश्चादग्नेरुदगग्रेषु दर्भेषु
प्राक् शिराः संविशति ॥

११ पश्चात्पतिरवस्थाय दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्या-
ऽभिसङ्गृह्य दक्षिणे नासिकास्रोतस्यवनयेत् । "पुमानग्निः पुमानि-
न्द्र" इत्यतेयर्चा ॥

१२ अथ यथार्थम् ॥

इति द्वि० प्र० षष्ठी काण्डिका ॥ २६ ॥

---

## अथ सप्तमी कण्डिका—

१ अथ सीमन्तकरणम्प्रथमगर्भे ॥

२ चतुर्थे मासि षष्ठेऽष्टमे वा ॥

३ प्रातः सशिरस्काऽऽप्लुतोदगग्रेषु दर्भेषु, पश्चादग्नेरुदगग्रेषु दर्भेषु
प्राच्युपविशति ॥

४ पश्चात्पतिरवस्थाय युग्मन्तमौदुम्बरं शलाटुग्रप्समाबध्नाति ।
"अयमूर्ज्जावतोवृक्ष" इति ॥

५ अथ सीमन्तमूर्ध्वन्नयति "भूरि"ति दर्भपिञ्जलीभिरेव प्रथमं, "भुव-
रि"ति द्वितीयं, "स्वरि"ति तृतीयम् ॥

६ अथ वीरतरेण "येनादितेरे" तयर्चा ॥

७ अथ पूर्णपात्रेण "राकामहमित्ये" तयर्चा ॥
८ त्रिश्वेतया च शलल्या "यास्ते राके सुमतय" इति ॥
९ कृसरः स्थालीपाक उत्तरघृतस्तमवेक्षयेत् ॥
१० "किम्पश्यसी" त्युक्त्वा "प्रजामि"ति वाचयेत् ॥
११ तं सा स्वयम्भुञ्जीत ॥
१२ "वीरसूर्जीवसूर्जीवपत्नी"ति ब्राह्मण्यो माङ्गल्याभिर्वाग्भिरुपासीरन् ॥
१३ अथ सोष्यन्तीहोमः ॥
१४ प्रतिष्ठिते वस्तौ परिस्तीर्य्याग्निमाज्याहुती जुहोति "या तिरश्ची" त्येतयर्चा "विपश्चित्पुच्छमभरदि"ति च ॥
१५ "पुमानयं जनिष्यतेऽसौ नामे"ति नामधेयं गृह्णाति ॥
१६ यत्तद्गुह्यमेव भवति ॥
१७ यदास्मै कुमारं जातमाचक्षीरन्, ब्रूयात् "काङ्क्षत नाभिकृन्तनेन स्तनप्रतिधानेन च ॥
१८ व्रीहियवौ पेषयत्तथैवाऽऽवृता यथा शुङ्गाम् ॥
१९ दक्षिणस्य पाणेरङ्गुष्ठेनोपकनिष्ठिकया चाङ्गुल्याऽभिसंगृह्य कुमारस्य जिह्वायां निर्म्मार्ष्टी-"यमाज्ञे"ति ॥
२० तथैव मेधाजननं सर्पिष्प्राशयेत् ॥
२१ जातरूपेण वाऽऽदाय कुमारस्य मुखे जुहोति "मेधान्ते मित्रावरुणा-वि"त्येतयर्चा "सदसस्पतिमद्भुतमि"ति च ॥
२२ कृन्तत नाभिमिति ब्रूयात्स्तनञ्च प्रतिधत्तेति ॥
२३ अत ऊर्ध्वमसमालम्भनमादशरात्रात् ॥

इति द्वितीयप्रपाठके सप्तमी कण्डिका ॥ २ ॥ ७ ॥

---

## अथाष्टमी कण्डिका—

१ जननाद्यस्तृतीयोज्यौत्स्नस्तस्य तृतीयायां प्रातः सशिरस्कं कुमार-माप्लाव्यास्तमिते वीते लोहितिम्न्यञ्जलिकृतः पितोपतिष्ठते ॥
२ अथ माता शुचिना वसनेन कुमारमाच्छाद्य दक्षिणत उदञ्चं पित्रे प्रयच्छत्युदक्शिरसम् ॥
३ अनुपृष्ठं परिक्रम्योत्तरतोऽवतिष्ठते ॥
४ अथ जपति-"यत्ते सुसीम" इति । "यथायन्नप्रमीयेत पुत्रोजनित्र्या-अधी"ति ॥
५ उदञ्चं मात्रे प्रदाय यथार्थम् ॥
६ अथ येऽतऊर्ध्वंज्यौत्स्नाः प्रथमोद्दिष्ट एव तेषु पितोपतिष्ठतेऽपामञ्ज-

लिं पूरयित्वाऽभिमुखश्चन्द्रमसम् ॥

७ "यददश्चन्द्रमसी"ति सकृद्यजुषा द्विस्तूष्णीमुत्सृज्य यथार्थम् ॥

( अत ऊर्ध्वं ज्यौत्स्नेष्वेतत्कर्मासंवत्सरम् )

८ जननाद्दशरात्रे व्युष्टे शतरात्रे संवँत्सरे वा नामधेयकरणम् ॥

९ अथयस्तत्करिष्यन्भवति पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङ्मुपविशति ॥

१० अथमाता शुचिना वसनेन कुमामारच्छाद्य दक्षिणत उदञ्चं कर्त्रे प्रयच्छत्युदक्शिरसम् ॥

११ अनुपृष्ठं परिक्रम्योत्तरत उपविशत्युदगग्रेषु दर्भेषु ॥

१२ अथ जुहोति प्रजापतये थितये नक्षत्राय देवताया इति ।

१३ तस्य मुख्यान्प्राणान्संमृशन् "कोऽसि कतमोऽसी"त्येतं मन्त्रं जपति ।

१४ "आहस्पत्यं मासं प्रविशासावि"त्यन्ते च मन्त्रस्य घोषवदाद्यन्तरन्तः स्थं दीर्घाभिनिष्ठानान्तं कृतं नाम दध्यात् ।

१५ एतद्तद्धितम् ॥

१६ अयुग् दान्तं स्त्रीणाम् ॥

१७ मात्रे चैव प्रथमं नामधेयमाख्याय यथार्थम् ॥

१८ गौर्दक्षिणा ॥

१९ कुमारस्य मासि मासि संवँत्सरे, सांवँत्सरिकेषु वा पर्वस्वग्नीन्द्रौ द्यावापृथिवी विश्वान्देवाँश्च यजेत ॥

२० दैवतमिष्ट्वा तिथिन्नक्षत्रञ्च यजेत ॥

२१ विप्रोष्य ज्येष्ठस्य पुत्रस्योभाभ्यां पाणिभ्यां मूर्धानं परिगृह्य जपेत् । यदा वा पिता म इति विद्यात् । उपेतस्य वा "ऽङ्गादङ्गात् सꣳस्रवसी"ति ॥

२२ "पशूनान्त्वा हिङ्कारेणाभिजिघ्रामी"त्यभिजिघ्रय यथार्थम् ॥

२३ एवमेवापरेषाम् ॥

२४ यथा ज्येष्ठय्यँथोपलम्भं वा ॥

२५ स्त्रियास्तूष्णीं मूर्धन्यभिजिघ्रणं मूर्धन्यभिजिघ्रणम् ॥

इति द्वितीयप्रपाठकस्याष्टमी कण्डिका ॥ २ ॥ ८ ॥

---

## अथ-नवमी-कण्डिका—

१ अथातस्तृतीये वर्षे चूडाकरणम् ॥

२ पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमाहितो भवति ॥

३ तत्रैतान्युपक्लृप्तानि भवन्ति ।

४ एकविꣳशतिर्दर्भपिञ्जूल्य उष्णोदककꣳस औदुम्बरः क्षुर आदर्शो

वा क्षुरपाणिर्नापित इति दक्षिणतः ॥

५ आनडुहगोमयः कृसरः स्थालीपाको वृथापक्व इत्युत्तरतः ॥

६ व्रीहियवैस्तिलमाषैरितिपृथक्पात्राणि पूरयित्वा पुरस्तादुपनिदध्युः ॥

७ कृसरोनापिताय सर्वबीजानि चेति ॥

८ अथ माता शुचिना वसनेन कुमारमाच्छाद्य पश्चादग्नेरुदग्रेषु दर्भेषु प्राच्युपविशति ॥

९ अथ यस्तत्करिष्यन्भवति पश्चात्प्राङवतिष्ठते ॥

१० अथ जपत्या-"यमगात्सविता क्षुरेणे"ति सवितारम्मनसाऽऽध्याय-नापितं प्रेक्षमाणः ॥

११ "उष्णेन वाय उदकेनैधी"ति वायुं मनासाध्यायन् उष्णोदककᳫंसं प्रेक्षणमाणः ॥

१२ दक्षिणेन पाणिना अप आदाय दक्षिणाङ्कपुष्णिकामुन्दति "आप उन्दन्तु जीवस" इति ॥

१३ "विष्णोर्दूदंष्ट्रोऽसी"ति औदुम्बरं क्षुरं प्रेक्षत आदर्शं वा ॥

१४ "ओषधे त्रायस्वैनमि"ति सप्त दर्भपिञ्जलीर्दूदक्षिणायां कपुष्णिका-यामभिशिरोग्रा निदधाति ॥

१५ तां वामेन पाणिना निगृह्य दक्षिणेन पाणिनौदुम्बरं क्षुरं गृहीत्वा (क्षुरमा)ऽऽदर्शं वा ऽभिनिदधाति "स्वधिते मैनᳫंहिᳫंसीरि"ति ॥

१६ "येन पूपा बृहस्पतेरि"ति त्रिः प्राञ्चम्प्रोह'त्यप्रच्छिन्दन्सकृद्यजुषा द्विस्तूष्णीम् ॥

१७ अथाऽऽयसेन प्राच्छिद्यानडुहे गोमये निदधाति ।

१८ एतयैवाऽऽवृता कपुच्छलम् ॥

१९ एतयोत्तरां कपुष्णिकाम् ॥

२० उन्दनप्रभृत्येवाभिनिर्वर्त्तयेत् ॥

२१ उभाभ्याम्पाणिभ्याम्मूर्द्धानम्परिगृह्य जपेत् ॥

२२ एतयैवावृता स्त्रियाः ॥

२३ तूष्णीम् ॥

२४ मन्त्रेण तु होमः ॥

२५ उदगग्नेरुत्सृप्य कुशलीकारयन्ति यथागोत्रकुलकल्पम् ॥

२६ आनडुहे गोमये केशान्कृत्वाऽरण्यᳫंहृत्वा निखनन्ति ॥

२७ स्तम्बे हैके निदधति ।

२८ यथार्थम् ।

२९ गौर्दक्षिणा ॥

इति द्वि० प्र० नवमी कण्डिका ॥ ९ ॥

अथदशमी—

१ गर्भाष्टमेषु ब्राह्मणमुपनयेत् ॥

२ गर्भैकादशेषु राजन्यम् ॥

३ गर्भद्वादशेषु वैश्यम् ॥

४ आषोड़शाद्वर्षाद्ब्राह्मणस्यानतीतः कालोभवत्याद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्य ॥

५ अत ऊर्ध्वम्पतितसावित्रीका भवन्ति ।

६ नैतानुपनयेयु नाध्यापयेयुर्न्नैभिर्विवहेयुः ॥

७ यदहरुपैष्यन्माणवकोभवति प्रग एवैनं तदहर्भोजयन्ति कुशलीकारयन्त्याप्लावयन्त्यलङ्कुर्वन्त्यहतेन वाससाऽऽच्छादयन्ति ॥

८ क्षौमशाणकार्पासौर्णान्येषां वसनानि ॥

९ ऐणेयरौरवाजान्यजिनानि ॥

१० मुञ्जकाशतामुन्यो रशनाः ।

११ पार्णबैल्वाश्वत्था दण्डाः ॥

१२ क्षौमᳫंशाणं वा वसनं ब्राह्मणस्य कार्पासं क्षत्रियस्याऽऽविकं वैश्यस्य ॥

१३ एतेनैवेतराणि द्रव्याणि व्याख्यातानि ॥

१४ अलाभे वा सर्वाणि सर्वेषाम् ॥

१५ पुरस्ताच्छालाया उपलिप्तेऽग्निरुपसमाहितोभवति ॥

१६ "अग्ने व्रतपते" इति हुत्वा पश्चादग्नेरुदगग्रेषु दर्भेषु प्राङाचार्य्योऽवतिष्ठते ।

१७ अन्तरेणाग्न्याचार्य्यौ माणवकोऽञ्जलिकृतोऽभिमुख आचार्य्यमुदगग्रेषु दर्भेषु ॥

१८ तस्य दक्षिणतोऽवस्थाय मन्त्रवान्ब्राह्मणोऽपामञ्जलिम्पूरयति ॥

१९ उपरिष्टाच्चाचार्य्यस्य ।

२० प्रेक्षमाणोजपत्या "गन्त्रा समगन्महो"ति ॥

२१ "ब्रह्मचर्य्यमागामि"ति वाचयति ॥

२२ "कोनामासी"ति नामधेयम्पृच्छति ॥

२३ अभिवादनीयन्नामधेयङ्कल्पयित्वा ॥

२४ देवताश्रयं वा नक्षत्राश्रयं वा ॥

२५ गोत्राश्रयमप्येके ॥

२६ उत्सृज्यापामञ्जलिमाचार्य्योदक्षिणेन पाणिना दक्षिणं पाणिᳫंसाङ्गुष्ठं गृह्णाति "देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्याᳫं·

हस्तं गृभ्णाम्यसावि"ति ॥

२७ अथैनं प्रदक्षिणमावर्त्तयति "सूर्य्यस्यावृतमन्वावर्त्तस्वासावि"ति ॥

२८ दक्षिणेन पाणिना दक्षिणमꣳसमन्ववमृश्यानन्तर्हितान्नाभिमभिमृशेत् "प्राणानां ग्रन्थिरसी"ति ॥

२९ उत्सृज्य नाभिदेश"महुर" इति ॥

३० उत्सृज्य हृदयदेशं "कृशन" इति ॥

३१ दक्षिणेन पाणिना दक्षिणमꣳसमन्वालभ्य "प्रजापतये त्वा परिददाम्यसावि"ति ॥

३२ सव्येन सव्यं "देवायत्वा सवित्रे परिददाम्यसावि"ति ॥

३३ अथैनꣳ सम्प्रेष्यति "ब्रह्मचार्य्यस्यसावि-"ति ॥

३४ "समिधमाधेह्यपोऽशान कर्म्म कुरु मा दिवा स्वाप्सीरि"ति ॥

३५ उदगग्नेरुत्सृज्य प्राङाचार्य्य उपविशत्युदगग्रेषु दर्भेषु ॥

३६ प्रत्यङ्माणवकोदक्षिणजान्वक्तोऽभिमुख आचार्य्यं उदगग्रेष्वेव दर्भेषु ॥

३७ अथैनं त्रिः प्रदक्षिणं मुञ्जमेखलाम्परिहरन् वाचयति "इयं दुरुक्तात् परिबाधमाने"-ति "ऋतस्य गोप्त्री"-ति च ॥

३८ अथोपसीद"त्यधीहि भोः सावित्रीं मे भवाननुब्रवीत्वि-"ति ॥

३९ तस्मा अन्वाह-पच्छो-ऽर्द्धर्चश ऋक्छ इति ॥

४० महाव्याहृतीश्च विहृता ओंकारान्ताः ॥

४१ वार्क्षञ्चास्मै दण्डम्प्रयच्छन्वाचयति "सुश्रवः सुश्रवसं मा कुर्वि"ति ॥

४२ अथ भैक्षञ्चरति ॥

४३ मातरमेवाग्रे, द्वे चान्ये सुहृदौ, यावत्यो वा सन्निहिताः स्युः ॥

४४ आचार्य्याय भैक्षन्निवेदयति ॥

४५ तिष्ठत्यहः शेषं वाग्यतः ॥

४६ अस्तमिते समिधमादधाति "अग्नये समिधमाहार्षमि"-ति ॥

४७ त्रिरात्रमक्षारलवणाशी भवति ॥

४८ तस्यान्ते सावित्रश्चरुः ॥

४९ यथार्थम् ॥

५० गौर्दक्षिणा

इति द्वि० प्र० दशमी कण्डिका ॥ १० ॥

इति द्वितीयः प्रपाठकः ॥ २ ॥

( अथसमावर्त्तनसूत्राणि )

## अथ तृतीयप्रपाठकस्य चतुर्थी कण्डिका—

१ ब्रह्मचारी वेदमधीत्य ॥
२ उपन्याहृत्य गुरवे ॥
३ अनुज्ञातो दारान्कुर्वीत ॥
४ असगोत्रान् ॥
५ मातुरसपिण्डान् ॥
६ नग्निका तु श्रेष्ठा ॥
७ अथाऽऽप्लवनम् ॥
८ उत्तरतः पश्चाद्वाऽऽचार्य्यकुलस्य परिवृतम्भवति ॥
९ तत्र प्रागग्रेषु दर्भेषूदङ्ङाचार्य उपविशति ॥
१० प्राग् ब्रह्मचार्य्युदगग्रेषु दर्भेषु ॥
११ शीतोष्णाभिराचार्य्योऽभिषिञ्चेत् ॥
१२ स्वयमिव तु ॥
१३ मन्त्रवर्णो भवति ॥
१४ "येऽप्स्वन्तरग्नयः प्रविष्टा" इत्यपामञ्जलिमवसिञ्चति ॥
१५ "यदपां घोरं यदपां क्रूरं यदपामशान्तमि"ति च ॥
१६ "यो रोचनस्तमिह गृह्णामी"त्यात्मानमभिषिञ्चति ॥
१७ "यशसे तेजस" इति च ॥
१८ "येन स्त्रियमकृणुतमि"-ति च ॥
१९ तूष्णीञ्चतुर्थम् ॥
२० उपोत्थायादित्यमुपतिष्ठते "उद्यन्भ्राजभृष्टिभि"—रित्येतत्प्रभृतिना मन्त्रेण ॥
२१ यथालिङ्गं वा विहरन् ॥
२२ चक्षुरसीत्यनुबध्नीयात् ॥
२३ मेखलामवमुञ्चत "उदुत्तमं वरुणपाशमि"ति ॥
२४ ब्राह्मणान्भोजयित्वा स्वयम्भुक्त्वा केशश्मश्रुलोमनखानि वापयीत शिखावर्ज्जम् ॥
२५ स्नात्वाऽलङ्कृत्याऽहते वाससी परिधाय स्रजमाबध्नीत "श्रीरसि मयि रमस्वे"ति ॥
२६ "नेत्र्यौ स्थो नयतम्मामि"-त्युपानहौ ॥
२७ "गन्धर्वोऽसी"ति वैणवदण्डं गृह्णाति ॥

२८ आचार्य्यं सपरिषत्कमभ्येत्याचार्य्यपरिषदमीक्षते ॥ "यक्षमिव चक्षुषः प्रियो वो भूयासमि-"ति ॥
२९ उपोपविश्य मुख्यान्प्राणान्त्संस्पृशन् "ओष्ठापिधाना नकुली"ति ॥
३० अत्रैनमाचार्य्योऽर्हयेत् ॥
३१ गोयुक्तं रथमुपसंक्रम्य पक्षसी कूबरं बाहू वाऽभिमृशेत् ॥
"वनस्पते वीड्वङ्गो हि भूया" इति ॥
३२ 'आस्थाता ते जयतु जेत्वानी-"त्यातिष्ठति ॥
३३ प्राङ्वोदङ्वाऽभिप्रयाय प्रदक्षिणमावृत्त्योपयाति ॥
३४ उपयातायार्घ्यमिति कौहलीयाः ॥

इति समावर्त्तनम् ॥ * ॥

---

अथार्हणा सूत्राणि—

चतुर्थप्रपाठके दशमी कण्डिका--

१ उत्तरतोगां बध्वोपोत्तिष्ठेरन् "अर्हणा पुत्रवासस"ेति ॥
२ "इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामी"-ति प्रतितिष्ठमानो जपेत् ॥
३ यत्रैनमर्हयिष्यन्तः स्युः ॥
४ यदावाऽर्हयेयुः ॥
५ विष्टरपाद्यार्घ्याचमनीयमधुपर्कानेकैकशस्त्रिस्त्रिवदयेरन् ॥
६ "या ओषधीरि-"त्युदगग्रं विष्टरमास्तीर्य्याध्युपविशेत् ॥
७ द्वौ चेत्पृथग्भ्याम् ॥
८ पादयोरन्यम् ॥
९ "यतोदेवीरि-"त्यपः प्रेक्षते ॥
१० "सव्यं पादमवनेनिज" इति सव्यं पादम्प्रक्षालयेत् । "दक्षिणं पादमवनेनिज" इति दक्षिणं पादम्प्रक्षालयेत् ॥
११ "पूर्वमन्यमपरमन्यमि-"त्युभौ शेषेण ॥
१२ "अन्नस्य राष्ट्रिरसी-"त्यर्घ्यं प्रतिगृह्णीयात् ।
१३ "यशोऽसी"त्याचमनीयमाचामेत् ॥
१४ "यशसोयशोऽसी-"ति मधुपर्कं प्रतिगृह्णीयात् ॥
१५ "यशसोभक्षोऽसि, महसोभक्षोऽसि, श्रीर्भक्षोऽसि श्रियम्मयि धेही" ति त्रिःपिबेत् ॥
१६ तूष्णीञ्चतुर्थम् ॥
१७ भूय एवाभिपाय शेषं ब्राह्मणाय दद्यात् ॥

१८ आचान्तोदकाय गौरिति नापितस्त्रिर्ब्रूयात् ॥
१९ "मुञ्च गां वरुणपाशाद्द्विषन्तंम्मेऽभिधेहीति-तञ्जह्यमुष्यचोभयोरुत्सृजगामत्तु तृणानि पिबतूदकम्" इति ब्रूयात् ॥
२० "माता रुद्राणामि"त्यनुमन्त्रयेत् ॥
२१ अन्यत्र यज्ञात् ॥
२२ कुरुतेत्यधियज्ञम् ॥
२३ षड्घ्याो भवन्ति ॥
२४ आचार्य्य ऋत्विक् स्नातको राजा विवाह्यः प्रियोऽतिथिरिति ॥
२५ परिसम्वँत्सरानर्हयेयुः ॥
२६ पुनर्य्यज्ञविवाहयोश्च पुनर्यज्ञविवाहयोश्च ॥

इति च० प्र० दशमी कण्डिका ॥ १० ॥ * ॥

प्रपाठकश्चायं समाप्तश्चतुर्थः ॥ ४ ॥ * ॥

---

( अथ संस्कारकुशण्डिकापरिशिष्टसूत्राणि )

## चतुर्थप्रपाठकेपञ्चमी कण्डिका—

१ काम्येष्वत ऊर्ध्वम् ॥
२ पूर्वेषुचैके ॥
३ पश्चादग्नेर्भूमौन्यञ्चौपाणीप्रतिष्ठाप्ये-"दम्भूमेर्भजामह" इति ॥
४ वस्वन्तᳬरात्रौ धनमिति दिवा ॥
५ "इमंस्तोममि"ति तृचेनपरिसमूहेत् ॥
६ वैरूपाक्षः पुरस्ताद्धोमानाम् ॥
७ काम्येषु च प्रपदः ॥
८ "तपश्चतेजश्चे"—ति जपित्वा प्राणानायम्यार्थमना वैरूपाक्षमारभ्योच्छ्वसेत् ॥

इति गोभिलगृह्यसूत्रे चतुर्थ प्र०प०मकण्डिकायामादितोवसुसूत्राणि॥*॥

---

अथाभ्युदयिकश्राद्धसूत्राणि—

## चतुर्थी कण्डिका—

अथाभ्युदयिके श्राद्धे युग्मानाशयेत्प्रदक्षिणमुपचार ऋजवोदर्भा यवस्तिलार्थः । सम्पन्नमिति तृप्ति प्रश्नोदधिवदराक्षतमिश्रान्पिण्डान्नान्दीमुखाः पितरः प्रीयन्तामिति वा चयेदिति पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्योवृद्धप्रमातामहेभ्यः स्वाहोच्यतामित्यस्तुस्वाहेत्युक्ते नस्वधाम्प्रयुञ्जीत ॥ ४-१-१० ॥ इति ॥

* श्रीः *

# अथ—

# गोभिलगृह्यसूत्रे—

श्रीमदाद्यापदाम्भोजद्वन्द्वन्नत्वा सताम्मुदे ।
गोभिलीये गृह्यसूत्रे सद्व्याख्याम्मृदुलाम्ब्रुवे ॥ १ ॥
महाराजाऽधिराजश्रीपरमेश्वरसुपालिता ।
नित्यं विजयते ह्येषा मिथिला कर्म्मठाऽऽवृता ॥ २ ॥
तत्र ग्रामे हरिपुरे ह्याटीतप्पान्तरेऽभवम् ।
श्रीमत्कृष्णपदाम्भोजद्वन्द्वेन्दिन्दिरमानसात् ॥ ३ ॥
नन्दलालाद्योगमायादेव्याङ्करमहान्वये ।
गोभिलः श्रीमुकुन्दोऽहम्प्रार्थितोऽकरवं पुरः ॥ ४ ॥
प्रकाशङ्कर्म्मकाण्डस्य मन्त्रार्थानान्निजैर्म्मुहुः ।
अन्तेवसद्भिः सुमना इमाङ्कुर्वेऽत्र (१)तन्मुदे ॥ ५ ॥
सूत्रोपन्यस्तमन्त्रार्थाश्छायया विवृता मया ।
अत्र, तत्रावशिष्टास्तु(२) कर्म्मकाण्डप्रदीपके ॥ ६ ॥
अस्य पूर्वैः कृता व्याख्या नैकधा याऽस्फुटाशया ।
ततोऽपि प्रामाणिकार्था उद्धृताः पूर्वसम्मताः ॥ ७ ॥

अथ तत्रभवान्भगवान्सामगाचार्य्यः ( पारस्करापराभिधानस्य कात्यायनस्य पिता ) गोभिलः कृतसमावर्त्तनानाङ्कौथुमशाखिनाङ्कर्म्मकाण्डं यथाश्रुतिस्मृति दर्शयञ्छास्त्रमिदमारेभे । यस्येदमादिमं सूत्रम्—

**अथातोगृह्या-कर्म्माण्युपदेक्ष्यामः ॥ १ ॥**

इति । अत्राथशब्दोग्रन्थारम्भार्थद्योतकोनिपात इति कश्चित् । आनन्तर्य्यवचनोमङ्गलप्रयोजन(३)कश्चेति राद्धान्तिकाः ॥

---

( १ ) गोभिलीये गृह्यसूत्रे तेषामन्तेवसतां श्रौतस्मार्त्त-कर्म्मकाण्ड-परीक्षादित्सूनान्तदर्थमधिजिगांसमानानां निरवशेषेण सताञ्चान्येषाङ्कर्म्मकाण्डतत्त्वबुभुत्सूनां मुद इत्युक्तार्थस्यैव विशदीकृतोऽर्थः पुनरुपनिबद्धः ।

( २ ) मन्त्रा-अर्था-स्तद्विशेषाश्च । तत्र-प्रसिद्धे कर्म्मकाण्डमन्त्रार्थप्रदीपे मयैव विवृता इत्यन्वितोऽर्थः ।

( ३ ) यथा यात्राकाले दधि-मत्स्यादि-दर्शनम्मङ्गलं, यथा वा मृदङ्गादिध्वनिश्रवणम् । तथैतदुच्चारणस्मरणे महतेऽभ्युदयाय ग्रन्थारम्भेऽवकल्पेत इति भावः । अनुपदमुपदर्शयिष्यमाणस्मृतौ माङ्गलिकावित्यस्य मङ्गलप्रयोजनकावित्यर्थे (पा० ५।१।१०९) ठकासाधनात् । एतद्द्योतकत्ववाचकत्वे उभावपि पक्षौ निपातेषु व्यवस्थितावित्येवमवद्धतम् ।

"मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरात् ।

ॐ कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।

कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" ॥ इति स्मरणाच्च ॥

अथ—वेदाध्ययन-तदर्थावगमानन्तरम् यतोयथावद्विचारशास्त्र(१)मधिगत्य स्थितानां स्नातकानां गार्हस्थ्यानुसरणं शास्त्रार्थः ।

"अतः परं समावृत्तः कुर्याद्दारपरिग्रहम्" इति ।

"वेदानधीत्य वेदौ वा वेदं (२)वापि यथाक्रमम् ।

अविप्लुतब्रह्मचर्योगृहस्थाश्रममावसेत्" ॥ इति चैवमादिस्मरणात् ।

यतश्च—

"यस्मात्त्रयोऽप्याश्रमिणोज्ञानेनान्नेन चान्वहम् ।

गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठोगृहाश्रमी" ॥

इत्यादिस्मृतेस्तस्यो(३)त्तमत्वमवगतम । अतः—एतस्मात्कारणादृगृह्या कर्म्माणि । गृहे गृहस्थाश्रमे साधूनि ( योग्यानि ) "तत्र साधुः" (पा० ४।४।९८) इति साध्वर्थे यत्प्रत्ययः । लक्षणया गृह्याग्निसाध्यानि वा कर्म्माणि धर्म्मभूतानि(४) आदित एव । उपदेक्ष्यामः(५) । कथयिष्याम इत्यर्थः । गृह्येति दीर्घश्छान्दसः(६) । ( पा० ६।३।१६७ ) "छन्दोवत्सूत्राणि भवन्ती"ति हि पातञ्ज-

---

( १ ) मीमांसाम् ।

( २ ) वेदशब्दोऽत्र विभिन्नशाखापरः । स्वशाखाध्ययनपूर्वकं वेदशाखानां त्रयं द्वयमेकां वा शाखां मन्त्रब्राह्मणक्रमेणाधीत्य गृहस्थाश्रमं गृहस्थविहितकर्म्मकलापरूपमावसेदनुतिष्ठेदिति तदर्थः । कृतदारपरिग्रहोगृहस्थः ।

( ३ ) गृहस्थाश्रमस्य ।

( ४ ) कर्माण्येव स्वव्यापारादृष्टरूपेण परिणमन्ति धर्म्मा इत्युच्यन्ते । तदेतद्भूतशब्दप्रयोगेणावेदितम्भवति । तथाचात्र कर्म्मधारयः समासः । गृह्याकर्माणीति ।

( ५ ) उपदेशशब्दार्थमाह-गृह्यभाष्यकारः "उपदेश उपसन्नस्यान्तेवासिनः स्वर्गापवर्गादिसाधकपदार्थसार्थकथनम्" इति । तथाचात्र दिशिरुच्चारणक्रियोभावे घञ् । उपदेशनमुपदेश इति ।

( ६ ) यद्वा गृहे साध्वी गृह्या पत्नी तया सहितस्य यानि कर्माणि तानीत्यर्थः । मध्यमपदलोपी समासः । ( पा० २।१।६० वा० ) अथवा गृह्या इति प्रस्तुतायाः स्मृतेरभिधानम् । तथा-चाचार्यपुत्रेण कात्यायनेन कृतोऽस्या एव स्मृतेः श्लोकेन सङ्ग्रहोगृह्यासङ्ग्रहपदेनैवाभिधीयत इति । तथाच गृह्यासङ्ग्रह एव—

"पत्न्यः पुत्राश्च कन्याश्च जनिष्याश्चापरे सुताः । गृह्या इति समाख्याता यजमानस्य दायकाः ॥ ३५ ॥ तेषां संस्कारयोगेन शान्तिकर्म्मक्रियासु च । आचार्यविहितः कल्पस्तस्माद्गृह्या इति स्थितिः" ॥३६॥ इति । वस्तुतस्तु—गृह्यः शालाग्निरावसथ्यः । औपासन इत्यनर्थान्तरम् । तस्मिन्स्मार्त्तेऽग्नौ यानि कर्त्तव्यानि कर्म्माणि तानि गृह्याकर्म्माणि "शेश्छन्दसि बहुलम्" ( पा० ६।१।७० ) इति शेर्जसः स्थाने विहितस्य लोपः । गृह्याणीति ।

लमहाभाष्यम् ॥ तदनेन सूत्रेणाभिधेयादीनि (१)शिष्यप्रवृत्त्युपयोगीनि स्वरसतोदर्शितानि।

तत्राभिधेयः कर्म्म यथोक्तम्। श्रेयः प्रयोजनम्। सम्बन्धोऽपि यथायथं सुखबोधः प्रतिपाद्यप्रतिपादकभावादिः। अथशब्देनानन्तर्यावगमादधिकार्यपि प्रतिपादितकल्प एवेत्यास्तां विस्तरः॥ १॥

तत्र तावत्साधारणकर्म्माङ्गभूताः केचन धर्म्माः परिभाष्यन्ते—

**यज्ञोपवीतिनाऽऽचान्तोदकेन च कृत्यम् ॥ २ ॥**

यज्ञार्थ—(२)मुपवीतं-ब्रह्मसूत्रय्यँथावद्विहितय्यँस्यास्ति स यज्ञोपवीती मत्वर्थे इनिः प्रत्ययः। (पा० ५।२।११५) तेन यज्ञोपवीतिना। आचान्तमाचमनविधिनेष(३)द्भक्षित(म्पीत)मुदकंयेनासावाचान्तोदकस्तेन। चकाराद्बद्धशिखेन। कृत्यम्-कर्म्म "कर्त्तव्यमि"ति सूत्रशेषः। तथाचच्छन्दोगपरिशिष्टम्—

"सदोपवीतिना भाव्यं सदा बद्धशिखेन च।
विशिखोव्युपवीतश्च यत्करोति न तत्कृतम्" ॥ १ ॥ इति।

यज्ञोपवीताचमनयोः स्वरूपमुपरिष्टाद्वक्ष्यति—"यज्ञोपवीतङ्कुरुते" (१।२।१) इत्यादिना।

इदानीङ्कर्म्माङ्गेषु वक्तव्येषु कालमेव तावत्परिभाषते—

**उदगयने पूर्वपक्षे पुण्येऽहानि प्रागावर्त्तनादह्नः कालं विद्यात् ॥ ३ ॥**

उदगयनं मकरादिषण्मासय्याँवत्सूर्य्यस्योदग्गमनात्प्रसिद्धं ज्यौतिषे। तत्र पूर्वपक्षे "पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ" इत्यमराच्छुक्लपक्षे। पुण्ये-पुनीते (शोभने) विष्ट्यादि-दोषरहिते यथोक्ते। अहनि-दिवसे। तत्रापि अह्नोवासरस्याऽऽवर्त्तनाच्छायायाः परिवर्त्तनात्। प्राक्-पूर्वम्पूर्वाह्ण इत्येतं कालं विद्यात्-जानीयात्। प्रकृतस्य कृत्यस्य (गृह्यकर्म्मणः) इत्यर्थः। स्मरन्ति च—"आवर्त्तनन्तु पूर्वाह्णोह्यपराह्णस्ततः परम्" इति।

अत्र पूर्वाह्ण इत्येव वक्तव्ये प्रागित्याद्यभिधान "पूर्वाह्णोवै देवानाम्मध्य-

---

(१) एतच्चतुष्टयमेवानुबन्धपदप्रतिपाद्यं यद्विना ग्रन्थादौ मङ्गलमुपनिबद्धमपि न शस्यते इत्युक्तमभियुक्तैः। यथा—

"विना विषयसम्बन्धौ तथैवार्थाधिकारिणौ।
व्याख्येयोभवेद्ग्रन्थः स्याद्ग्रन्थे तच्चतुष्टयम्" इति॥

"विनाऽनुबन्धं ग्रन्थादौ मङ्गलं नैव शस्यते" इति चैवमादि। तल्लक्षणञ्च "ग्रन्थाऽध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्त्वम्" इति। प्रवृत्तिजनकञ्चेष्टसाधनताज्ञानं, कृतिसाध्यताज्ञानञ्च। तज्जनकञ्चानुबन्धज्ञानम्। विशिष्टबुद्धौ विशेषणज्ञानं कारणम्। इति॥

(२) अत्र तादर्थ्यचतुर्थ्या समासः। (३) आ-इतीषदर्थेऽव्ययम्।

न्दिनं मनुष्याणामपराह्णः पितॄणाम्" इति श्रुत्युक्तदिनप्रथमतृतीयभागात्मकपूर्वाह्णव्यवच्छे(१)दायेति बोध्यम् ॥ ३ ॥

एवन्तर्ह्युदगयनाद्यभावे शास्त्रबलादप्यनुष्ठीयमानस्य पिण्डपितृयज्ञादेः समयवैगुण्यं स्यादत आह—

**यथाऽऽदेशश्च ॥ ४ ॥**

कालं विद्यादित्यनुवर्त्तते । आदेश आज्ञा शास्त्रस्य । तमनतिक्रम्येत्यर्थः । आदिशति च शास्त्रं किञ्चित्कर्म्मोदगयनाद्यभावेऽपीति तत्राऽनङ्गतैवामीषा,—मङ्गता च यथोक्तानाम् ॥ ४ ॥

**सर्वाण्येवान्वाहार्य्यवन्ति ॥ ५ ॥**

अनुपश्चादाह्रियते प्रकृतङ्कर्म्म यस्मादिति, अनुपश्चादाह्रियते यत्प्रस्तुतात्कर्म्मणः । इति चान्वाहार्यं नान्दीमुखश्राद्ध(२)न्दक्षिणा चोच्यते । अत एव गृह्यान्तरम्—

"यच्छ्राद्धङ्कर्म्मणामादौ या चान्ते दक्षिणा भवेत् ।
अमावास्यान्द्वितीयय्यँदन्वाहार्य्यन्तदुच्यते" इति ॥

तद्विद्यते येषान्तानि । तदयमर्थः । सर्वाण्येव प्रकृतत्वाद् गृह्यकर्म्माणि । अन्वाहार्यवन्ति तत्पूर्वकाणि । एवकारोऽयोगव्यवच्छे(३)दार्थः । अतोगृह्यानुक्तेष्वपि अन्नप्राशनादिषु शास्त्रान्तराच्छ्राद्धं ( नान्दीमुखं ) दक्षिणा च न विरुद्ध्यते । क्वचित्तु-निषिध्यतेऽपि यथोक्तं कर्म्मप्रदीपे—

"नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।
न शोष्यन्ती-जातकर्म्म-प्रोषितागतकर्म्मसु ॥"

इत्यादि । अमावास्यामिति । अमावास्यां प्रकृत्य (प्रतिपदि) मासिकं श्राद्धं ( साग्नीनाम् ) अन्वाहार्यम्(४) । यथाह मनुः—

---

( १ ) वस्तुतस्तु-कर्म्मणोवृद्धिश्राद्धपूर्वकत्वाच्छ्राद्धस्य चोदयसन्निधौ—

"रात्रौ श्राद्धन्न कुर्वीत राक्षसी कीर्त्तिता हि सा ।
सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते" ॥

इति मनुना प्रतिषिद्धत्वात् । तथाभूत एव कालोऽनायत्या कर्म्मौपयिक इति बोध्यम् । विसमासकरणमेकैकस्य बाहुगुण्यद्योतनार्थम् । समुच्चितोपलब्धौ तु महानभ्युदय इति गृह्यभाष्यकारः ।

( २ ) याज्ञिकप्रसिद्धिरेषा आभ्युदयिकश्राद्धस्य नान्दीमुखस्यनामेदमिति । एतच्च श्राद्धम्मातृकापुजापूर्वकं स्यात्तथा च छन्दोगपरिशिष्टम् । "कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः । पूजितव्याः प्रयत्नेन पूजिताः पूजयन्ति ताः" इति । तद्विधिश्च वक्ष्यते ( ४।१।१० ) ॥

( ३ ) यथा—"शङ्खः पाण्डुर एवे"-त्यत्र पाण्डुरवर्णायोगोव्यवच्छिद्यते ।

( ४ ) अनु-पश्चादमावास्याया एतदाह्रियत इति ।

"पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्" । इति ।

गोभिलोऽपि—अमावास्यायां पिण्डपितृयज्ञमभिधाय "इतरदन्वाहार्यं मासीनम्" ( ३।५।३ ) इत्याह । तदेतत्साग्निना प्रतिपदि आह्रियते ॥ ५ ॥

**अपवर्गेऽभिरूपभोजनं यथाशक्ति ॥ ६ ॥**

क्रियापरिसमाप्तिरपवर्गस्तस्मिन् । अभिरूपोविद्वान् कृतबुद्धिरनुष्ठाता चेत्याहुः(१) । तादृशस्याभिरूपस्याभिरूपयोरभिरूपाणां वा भोजनम् । यथाशक्ति—शक्तिमनतिक्रम्य वित्तशाठ्यमन्तरा "गृह्याकर्म्मसु विद्यादि"ति वाक्यशेषः । तथा च शक्तिसत्त्वेऽन्यथाकरणं निषेधति मनुः—

"प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।
न साम्परायिकन्तस्य दुर्मतेर्विद्यते फलम् ॥" इति ।

साम्परायिकं (२)पारलौकिकम् ॥ ६ ॥

इति सर्वकर्म्मसाधारणविधयः ॥ ❀ ॥

## ( अथाग्न्याधानविधिः )

एवं सर्वकर्म्मसाधारणं परिभाष्य प्रायेणाग्निसाध्यत्वात्कर्मणामग्न्याधानकालन्तावदाह(३)—

**ब्रह्मचारी वेदमधीत्यान्त्याᳬ समिधमाधास्यन् ॥ ७ ॥**

ब्रह्म वेदस्तदध्ययनार्थं व्रतमपि ब्रह्म, तच्चरत्यनुतिष्ठतीति ब्रह्मचारी । ताच्छील्ये णिनिः । ( पा० ३।२।७८ ) उपधावृद्धिः । उपकुर्वाण एव न नैष्ठिकः । तस्य ह्यामरणाद्गुरुकुल एवावस्थानानुज्ञानम् ॥ स वेदमिति जात्येकवचनम्—

"वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥"

---

( १ ) तथाचामरः "प्राशरूपसरूपाभिरूपा बुधमनोज्ञयोः" इति । "अभिरूपोबुधे रम्ये" इति मेदिनी च। सर्वञ्चेदमुपनिबद्धं गृह्यासङ्ग्रहे—"यत्र विद्या च वित्तञ्च सत्यं धर्म्मः शमोदमः । अभिरूपः स विज्ञेयः स्वाश्रमे योव्यवस्थितः" । इति ।

( २ ) "युद्धायत्योः सम्पराय" इत्यमरादायतिशब्देन परलोकमुच्यते । ततो "विनयादित्वात ( पा० ५।४।३४ ) ठक् । ठस्येकः ( पा० ७।३।५ ) आदिवृद्धिः । ( पा० ७।२।११८ ) इति भानुजिद्दीक्षिताः । वस्तुतस्तु—"उत्तरः काल आयतिरित्यमरादायतिशब्दउत्तरकालवचन इति कालाट्ठञ्" ( पा० ४।३।११ ) इति ठञेवात्रेति बोध्यम् ।

( ३ ) अन्ये तु व्याचक्षते—उक्तं गृह्याकर्म्माणीति तत्र कोऽसौ गृह्योऽग्निः ? इति प्रथमन्तावत्स एवोपदिश्यते—"ब्रह्मचारी"त्यारभ्य "स एवास्य गृह्योऽग्निर्भवती"ति ( १।१।२१ ) एतदन्तेन सूत्रसन्दर्भेणेति ।

इति मनुस्मरणात् । यथाशक्ति-अधीत्य अन्त्यामन्ते ब्रह्मचर्यावसाने भवाम् । "भवेच्छन्दसि" ( पा० ४।४।११० ) इति यत्प्रत्ययः । समिधं यथोक्तलक्षणाम्(१) आधास्यन् आऽऽभिमुख्येन (प्रातराहुतौ) धास्यन्नग्नौ प्रक्षेप्स्यन् "अग्निसमाधानङ्कुर्वीत" ( १।२।१४ ) इति परस्मात् सिंहावलोकितकेन सम्बध्यते । तथा च ब्रह्मचारिणा ब्रह्मचर्य समाप्य गृहस्थाश्रमं प्रविविक्षुणा या पश्चिमा समिदाधेया सा अपामाहरणादिपूर्वकमग्निप्रणयनं कृत्वैव (२)तत्र स्वकीयेऽग्नौ तामन्त्यां समिधमादधीतेति सूत्रकृदभिप्रायः । अत्र च "निराश्रमी न तिष्ठेत क्षणमेकमपि द्विजः" इति दक्षस्मरणात्स एवादधीत यस्मै पूर्वमेव काचित्कन्या केन चिद् वाचा दत्ताऽऽसीदिति स्पष्टयति कात्यायनः—

"यस्य दत्ता भवेत्कन्या वाचा सत्येन केन चित् ।
सोऽन्त्यां समिधमाधास्यन्नादधीतैव नान्यथा ॥" इति ॥ ७ ॥

अग्न्याधानस्य कालान्तरमाह—

**जायाया वा पाणिं जिघृक्षन् ॥ ८ ॥**

यदि ब्रह्मचर्यसमापकान्त्यसमिदाधानकाले दैवादग्निग्रहणं न कृतम्भवेत्तदा पूर्वपूर्वदिनवद्गुरोरग्नावेव तामन्त्यां समिधमादधीत ॥ पुनः कोऽग्निग्रहणकालः ? इत्याह जायायावेति । वा-अथवा । जायाया जायात्वेनाभि(३)संहिताया पाणिङ्करं जिघृक्षन्-ग्रहीतुमिच्छन् ( पाणिग्रहणात् पूर्वमेव ) अग्निसमाधानङ्कुर्वीत ( १।१।१४ ) । तदत्र "भार्यादिरग्निः" इति शास्त्रदर्शनाद्भार्यासम्बन्ध एक एव निमित्तमग्न्याधानस्य । तस्य च कालद्वयमुक्तम् "आधास्यन्नि"ति । "जिघृक्षन्नि"ति च ॥ ८ ॥

---

( १ ) तथाच वक्ष्यति—"अथेध्मानुपकल्पयते" ( १।६।१४-१६ ) इत्यादि । इध्मं समिदित्यनर्थान्तरम् । यल्लक्षणमाह कर्मप्रदीपः—

"नाङ्गुष्ठादधिका ग्राह्या समित्स्थूलतया क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥
प्रादेशान्नाधिका नोना न तथा स्याद्विशाखिका ।
न सपर्णा न निर्वीर्या होमेषु च विजानता" ॥ इति ।

अन्त्यालक्षणमाह गृह्यासङ्ग्रहः—

"आचार्येणाभ्यनुज्ञात आचार्याग्नौ विधिर्यथा ।
प्रणीतेऽग्नौ समिद्दद्यादन्त्या सा ब्रह्मचारिणाम्" ॥ इति ॥

( २ ) न तु यथाऽन्वहमाचार्याग्नावेव "न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम् । स्वगर्भसंस्क्रियार्थाश्च यावन्नासौ प्रजायते" । इति कर्मप्रदीपवचनात्समिधमादधातिस्म तथा तदानीमादधीतेति ।

( ३ ) भाविनि भूतवदुपचारेणेदम् । तथा च श्रुतिः "पतिर्जायां प्रविशति गर्भोभूत्वेह मातरम् । तस्यां पुनर्नवोभूत्वा दशमे मासि जायते ॥ तज्जाया जाया भवति यदस्यां जायते पुनः" इति । एष चोपचारः सूत्रशाटकवत् ॥

## अथाऽग्न्याधानविधिः

**अनुगुप्ता अप आहृत्य प्रागुदक्प्रवणन्देशं समं वा परिसमुह्योपलिप्य मध्यतः प्राचीर्ल्लेखामुल्लिख्योदीचीश्च संहतां पश्चात् मध्ये प्राचीस्तिस्र उल्लिख्याऽभ्युक्षेत् ॥ ९ ॥**

अनुगुप्ता आच्छादिताः "कुशैरि-"ति शेषः। "कुशैराच्छादिता अप आनयन्ती-"ति गृह्यान्तरसंवादात्। प्रच्छादनञ्च पतितादिभिरुदकदर्शनं मा भूदित्येतदर्थम्। अदृष्टाथ वा। अप उदकम् आहृत्य-अनिषिद्धजलाशयादानी(१)य। प्रागुदक्प्रवणम्-प्राग्वा उदग्वा प्रागुदग्वा(२) प्रवणं क्रमनिम्नम्। "प्रवणं क्रमनिम्नोर्व्यीम्" इत्यमरः। देशं-भूमिभागं, समं-अपाङ्नीचादिरहितम्। वाशब्दो विकल्पार्थः। तद्व्यवस्थामाह—गृह्यासङ्ग्रहः

"प्राङ्नीचं ब्रह्मवर्चस्यमुदङ्नीचं यशोन्नतम्।
पित्र्यन्दक्षिणतोनीचं प्रतिष्ठालम्भकं समम्" ॥ इति।

प्रतिष्ठालम्भकम्—प्रतिष्ठाप्रापकम् ॥ परिसमुह्य-परि-सर्वतः। समुह्य—कुशैः पांश्वादिकमपसार्य्य। तथाच भरद्वाजः—

"कुशैः संमार्जयेद्भूमिं शुद्धामादौ, शुचिस्ततः।
हस्तमात्राश्चतुरस्राङ्गोमयेनोपलेपयेत्" ॥ इति।

यद्वा "परिसमुह्य वितस्तित्रये उत्तरत उत्करं करोती"ति गृह्यान्तरदर्शनादुत्तरस्यान्दिशिवितस्तित्रयोपरिदेशे प्रक्षिप्य। वितस्तिर्द्वादशाङ्गुलः। अत्र-मान कर्त्तारमाह कर्म्मप्रदीपः—

"मानक्रियायामुक्तायामनुक्ते मानकर्त्तरि।
मानकृद्यजमानः स्याद्विदुषामेष निर्णयः" ॥

इति। परिसमूहनकुशानाञ्च परित्यागोविधेयः। अन्यत्र तथादृष्टत्वात्। यथा "सम्माजर्नान्यपास्यती"ति। परित्यागश्चैशान्याम् "द्वारमेव हि द्रव्याणां प्रागुदीच्यान्दिशि स्मृतम्" इति वचनात्। प्रागुदीची-ऐशानी ॥ उपलिप्य-गोमयोद(३)केनेति वाक्यशेषः। "गोमयोदकेन समन्तं (स्तं) पर्य्यु-

---

(१) अत्र "ताभिः प्रक्षालितपाणिपादः" इति भट्टभाष्यन्त"दाचान्तोदकेने"ति (१।१।२) सूत्रेण गतार्थम्।

(२) अत्र "दिङ्नामान्यन्तराले" (पा०२।२।२६) इति बहुव्रीहिणा ऐशानीति तदर्थः।

(३) गोमयमिश्रितोदकेनेति मध्यमपदलोपी समासः (पा०२।१।६० वा०) एतेन गोमयोदकाभ्यामिति वक्तव्ये "सर्वोद्वन्द्वोविभाषैकवद्भवती"ति परिभाषाश्रयणं मुरारिमिश्राणामपार्थकम्बोध्यम्। तथा चोक्तभारद्वाजवचने "गोमयेने"ति सवारिणेत्येतदाक्षिपति। तथा च शौनकः "गोमयेन सवारिणा। उपलिप्य स्थण्डिलन्तु चतुरस्रन्तु सर्वतः" इति।

पलिम्पती-"ति गृह्यान्तरदर्शनात् ॥ देशमिति सम्बध्यते । मध्यतः स्थण्डिलाभ्यन्तरे। दक्षिणांश एव न तु मध्यांशे। हस्तमात्रस्थण्डिलेऽपि उदग्गतैकविंशत्यङ्गुलरेखायास्तन्मूललग्नायाः करणोपदेशात्। अत एव च स्मर्यते—

"अङ्गुष्ठमात्रं भूभागं त्यक्त्वा दक्षिणतः सुधीः।
उत्तरे द्व्यङ्गुलन्त्यक्त्वा पश्चिमेऽप्यङ्गुलद्वयम्" इति।

प्राचीं-प्राग्गताम् । लेखां-द्वादशाङ्गुलप्रमाणां पार्थिवीम्पीतवर्णां दक्षिणहस्तेन(१) कुशेन (२)फलपुष्पान्यतरेण वा उल्लिख्य । उदीचीमुदग्गताञ्च लेखामेकविंशत्यङ्गुलप्रमाणामाग्नेयीं लोहितवर्णामुल्लिख्य। चकारोलेखामुल्लिख्येत्यनुषङ्गार्थः। तामिमा(मुदीचीं लेखां)विशिनष्टि-संहताम्-प्राग-

---

स्थण्डिलं मार्जनादिसंस्कृता समभूमिः। गोमयं च बन्ध्यादीनां न ग्राह्यम् । तथाच शाट्यायनः—

"अमेध्यसेविनी-बन्ध्या-प्रसूतानाञ्च गोमयम्। जीर्णायाश्चोपलेपार्थं नाहर्त्तव्यं कदाचन"॥ इति। अमेध्यसेविनी—पुरीषादिभक्षिणी । प्रसूता-अनतीतदशरात्रप्रसवा ॥ अत्र भूमावुपलेपनवन्मृदाच्छादनमपि केचिदाचक्षते। तथाच गृह्यासङ्ग्रहः—

"मेदस्युद्ध्रियमाणे तु शेषङ्किञ्चिच्च तिष्ठति । अन्तर्द्धानं मृदा चेदि दीयते वेदनिश्चयः" इति। ननु—"विष्णुपादपरिक्रान्ता वराहेणोद्धृता मही। अतः पृथ्वी सदा पूता किमर्थमुपलिप्यते ?" ॥ इति चेदत्राहाङ्गिराः—"इन्द्रेण वज्राभिहतः पुरा वृत्रोमहासुरः। मेदसा तस्य सङ्कीर्णा तदर्थमुपलिप्यते" इति।

(१) तथाच कात्यायनः—"कर्मोपदिश्यते यत्र कर्त्तुरङ्गं न चोच्यते। दक्षिणस्तत्र विज्ञेयः कर्म्मणां पारगः करः" इति।

(२) तथाच कात्यायनः—"लक्षणे प्राग्गतायास्तु प्रमाणं द्वादशाङ्गुलम्। तन्मूललग्ना योदीची तस्या एतन्नवोत्तरम् ॥ उदग्गतायाः संलग्नाः शेषाः प्रादेशमात्रिकाः। सप्तसप्ताङ्गुलांस्त्यक्त्वा (तास्तास्युः) कुशेनैव समुल्लिखेत"। इति ॥ लक्षणे-अनुपदं (१।१।१०) वक्ष्यमाणलक्षणे। एतद्-द्वादशाङ्गुलम्। नवोत्तरं-नवाधिकम्। कुशेनैवेत्येवकारोविशेषविहितफलाद्यतिरिक्तव्यवच्छेदकः। तथाचाङ्गिराः "न नखेन न काष्ठेन नाश्मना मृन्मयेन वा। प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु योभवेत्॥ भवेन्नखेन कुनखी काष्ठेन व्याधिमृच्छति। अश्मना धनहानिः स्यान्मृन्मयेन कलिर्ध्रुवम्॥ फलेन फलमाप्नोति पुष्पेण श्रियमृच्छति। पर्णेन चार्थकामाप्तिर्दीर्घायुस्तु कुशेन वै॥ तस्मात्फलेन पर्णेन पुष्पेणाथ कुशेन वा । प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु योभवेत्" इति॥ अत्रान्ते "कर्म्मसु" इति पाठान्तरम्। अतएव फलपुष्पकुशानामन्यतमेन लेखाङ्कुर्यादिति महामहत्तकवीश्वरादिपद्धतिलेखनमपि सङ्गच्छते। अत्र सप्ताङ्गुलान्तरालात्वं कुशेनैवरेखाकरणमभिप्रेत्य। गृह्यासङ्ग्रहे-"सूक्ष्मास्ता ऋजवः कार्या लेखास्ताः सुसमाहिताः" इत्युपसंहारदर्शनात। तस्योपलक्षणतया फलादिना लेखाकरणे तु तासां स्थूलत्वात्ताभ्यामङ्गुलित्रयस्थलव्यापनात् षडङ्गुलांस्त्यक्त्वेत्येव युज्यते। अत एव षडङ्गुलान्तरालाः सप्तसप्ताङ्गुलान्तराला वेति श्रीदत्तोपाध्यायाः स्वाह्निके प्राहुः। प्रादेशमात्रिका इत्य[illegible] तु विशेषोऽनुपदं द्रष्टव्यः।

तायाः संलग्नां, पश्चात्-पश्चिमे-प्राग्गताया इत्यादिः। मध्ये-अनन्तरोक्तत्वादुदग्गतायाः। संलग्नाः प्राचीः प्राग्गतास्तिस्रोलेखाः। तत्र मध्ये द्वे प्रादेशप्रमाणे। अन्त्या द्वादशाङ्गुला। सर्वाः षड़ङ्गुलान्तराला(१) दक्षिणत उपक्रमदर्शनादुत्तरोत्तरा उल्लिख्य। आसाञ्च तिसृणां लेखानामेका प्राजापत्या कृष्णवर्णा, द्वितीया चैन्द्री नीलवर्णा, तृतीया सौमी शुक्लवर्णेत्यवगन्तव्यम्॥

तदेतत्सर्वं छन्दोगपरिशिष्टवचनात्स्मृत्यन्तरसंवादाच्चावसीयते। तथाचाङ्गिराः—

"प्राग्गता(२) पार्थिवी ज्ञेया चाग्नेयी चाप्युदग्गता।
प्राजापत्या तथा चैन्द्री सौमी च प्राकूकृता(३) स्मृता॥
पार्थिवी पीतवर्णा स्यादाग्नेयी लोहिता भवेत्।
प्राजापत्या भवेत्कृष्णा नीलामैन्द्रीं विनिर्दिशेत्॥
श्वेतवर्णा च सौमी स्याद्रेखाणां वर्णलक्षणम्॥"

इति। रेखाणां-लेखानाम्। "लेखालिपिराजिकयोर्म्मता" इति मेदिन्यां "लेखास्तु राजयः" इत्यमरे च लादित्वस्यैव श्रवणात्। रलयोरैक्याद्रेखामुल्लिख्येति पाठः। आसां वर्णाश्च यथोद्दिष्टा ध्येया एव न तु द्रव्यान्तरेण तद्वर्णकरणम्। "विनिर्द्दिशेदि"ति वचनस्वरसादिति शुभकर्म्मनिर्णये मुरारिमिश्राः। अतएव ध्येयपीतवर्णा लेखा लिखितव्येति पद्धतिकृतः ( महामहत्तकवीरेश्वरादयः ) पठन्ति। एतच्च लेखोल्लेखनं यावदग्निस्थापनं सव्यहस्तं भूमौ निधाय कर्त्तव्यम् इत्याहाङ्गिराः-

"सव्यं भूमौ प्रतिष्ठाप्य प्रोल्लिखेद्दक्षिणेन तु।
तावन्नोत्थापयेत्पाणिं यावदग्निं निधापयेत्"॥

(१) तथाचाङ्गिराः—"पार्थिवीं चैव सौमीञ्च लिखेद्द्वे द्वादशाङ्गुले। एकविंशतिराग्नेयी प्रादेशिन्यावुभे स्मृते॥ षडङ्गुलान्तराः कार्या अग्नेयी संहतास्तु याः। पार्थिव्याश्चैव रेखाया—स्तिस्रस्ता उत्तरोत्तराः"॥ इति॥ ननु—"शेषाः प्रादेशमात्रिकाः" इति कात्यायनवचनेन सौम्या अपि प्रादेशप्रमाणकत्वबोधनाद्विरोध इति चेन्मैवम्। तस्य न्यूनसंख्याव्यवच्छेदमात्रपरत्वात्। अन्यथा विरोधस्य परिहर्त्तुमशक्यत्वात्। अत एव "द्वादशाङ्गुलप्रमाणा सोमदेवताका" इति निर्विचिकित्सितं स्वस्वपद्धतौ वीरेश्वरादयो लिखितवन्तः। यद्वा ऐच्छिको विकल्पः। फलभूमा व्यवस्थितेति दिक्। द्वादशाङ्गुलत्वादिकन्तु यजमानाङ्गुलिबृहत्पर्वभिः कार्यम्। तथाच कात्यायनः—

"मानक्रियायामुक्तायामि"त्याद्युक्तवचनान्ते "अङ्गुष्ठाङ्गुलिमानन्तु यत्र यत्रोपदिश्यते। तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात्सदा"॥ इति॥

(२) (३)अत्र श्रिता इति मुरारिमिश्रसम्मतः पाठः। प्राक् श्रिता-पूर्वाग्रा-इत्येवन्तव्याख्यानं शुभकर्मनिर्णये। अत्र ( गृह्यासङ्ग्रहवचने ) पार्थिवीसौम्योः क्रमेण शुक्लपीतत्वाभिधानं वीरेश्वराद्यननुमतत्वात्पाठभ्रमेणैवेति बोध्यम्।

इति । एवमुल्लेखनानन्तरमेव ताभ्य(१)उत्कर(म्मृद)मुद्धृत्य प्रागुदीच्यान्दिश्यरत्निमात्रे(२) निधाय । अभ्युक्षेत्-"उक्षसेचन" (भ्वा० प०) इति स्मरणादाभिमुख्येन—

"उत्तानेनैव हस्तेन प्रोक्षणं समुदाहृतम् ।
न्यञ्चताऽभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं मतम् ॥"

इति स्मृत्यन्तरोक्तप्रकारेण सिञ्चेत् । अद्भिरिति सामर्थ्यात् । यथोक्तरेखा इत्यर्थः ॥ ९ ॥

## लक्षणाऽऽवृदेषा सर्वत्र ॥ १० ॥

परिसमू(३)हनादि अभ्युक्षणान्तं कर्म्म लक्षणसंज्ञं,तस्य आवृत्-परिपाटी । "आनुपूर्व्या स्त्रियां वाऽऽवृत्परिपाटीअनुक्रमः" इत्यमरः । एषा अनन्तरोक्ता न तु विपरीता । सर्वत्र । यत्र यत्रवचनादर्थयुक्त्या वाऽग्निःप्रणीयते तत्र तत्रेत्यर्थः । इदञ्च 'भूसंस्कारकङ्कर्म्म, अग्निसंस्कारकञ्च' (४)तथा च गृह्यान्तरम् "सम्मृज्योपलिप्योल्लिख्योद्धृत्याभ्युक्षेदेष भूसंस्कारोऽग्नावनुगते भूय"इति । इति भाष्यकारः ॥ १० ॥

## "भूर्भुवः स्वरि"त्यभिमुखमग्निम्प्रणयन्ति ॥ ११ ॥

अग्निं—वक्ष्यमाणयोनिं कांस्यपात्रस्थं कृत्वा तथा नीत्वा(५)आवर्त्त्य सम्यग्भ्रामयित्वा च अभिमुखं-यथा भवति ( आत्मनः ) तथा "भूर्भुवःस्वः" इति—अनेन मन्त्रेण प्रणयन्ति प्रणयेयुः । लिङर्थे लेट् (पा०३।४।७)

(१) यच्चा-"प्युद्धृत्याभ्युक्षे"-दिति क्त्वा श्रवणादानन्तर्यमनयोरित्येके प्रवदन्ति । तन्मुधैव । पूर्वोत्तरभावस्यैव "समानकर्तृकयोः पूर्वकाले" (पा० ३।४।२१) इति क्त्वाविधिस्मृत्या बोधनात् । अतएव "उल्लिख्योद्धृत्याभ्युक्षेदि"-ति कात्यायनसूत्रमनुसन्धाय "उत्करं गृह्य रेखाभ्योऽरत्निमात्रे निधापयेदि"ति गृह्यासङ्ग्रहधृताङ्गिरोवचनमपि सङ्गच्छते ॥

(२) ऐशान्याम् । अरत्निश्चतुर्विंशाङ्गुलः । यथाह कात्यायनः—

"अङ्गुलस्य प्रमाणान्तु षड्यवाः पार्श्वसम्मिताः । चतुर्विंशाङ्गुलोऽरत्निर्वितस्तिर्द्वादशाङ्गुलः ।" इति ।

(३) अवाहरणाद्यभ्युक्षणान्तमिति केषाञ्चिद्व्याख्यानम् ।

(४) यत्र यत्राग्निप्रणयनं क्रियते तत्र तत्र भुवः संस्कारविधानाद्भूसंस्कारकम् । अनुगतेऽग्नौ संस्कृताया अपि भूमेः पुनः संस्कारविधानादग्निसंस्कारकम् ॥

(५) प्राञ्चं नीत्वाऽऽवर्त्त्य स्थापयन्ती"-ति स्मरणात् । गृह्यासङ्ग्रहे तु-"लक्षणन्तत्प्रवक्ष्यामि प्रमाणन्दैवतञ्च यत् ।" इत्येवमभिधानाद्रेखाकरणमात्रं लक्षणमिति प्रतीयते । किन्तु मुरारिमिश्रादिभिःकर्मठप्रसिद्ध्योभयमेव व्याख्यातम् ॥

लेखोपरि स्थाप(१)येयुरित्यर्थः । एवमग्रेऽपि यथायथमूह्यम् ।(२) पात्रविशेषो-

(१) सर्वकर्मसु सर्वैरेवकर्म्मिभिरेवमग्निप्रणयनङ्कार्यमिति सामान्यविधित्वख्यापनायैव बहुवचनं, सर्वे प्रणयेयुरिति ॥

(२) अत्र "क्रव्यादमग्निम्प्रहिणोमि दूरं यमराज्यङ्गच्छतु रिप्रवाहः" इत्यर्द्धर्चेन क्रव्यादाग्निमितोनिः सार्याग्निप्रणयनमिदङ्कार्य्यम् । "आनीयाग्निं सुपात्रेण क्रव्यादांशं परित्यजेद्" इति अग्निपुराणवचनात् । मन्त्रलिङ्गाच्च । तथाहि-अद्दे क्रव्यादमाममांसादं "क्रव्ये च" ( पा० ३।२।६९ ) इत्यदेविट्प्रत्ययः । आममांसशब्दस्य क्रव्यादेशः पृषोदरादित्वात् ( पा० ६।३।१०९ ) तन्नामकमग्निं दूरं विप्रकृष्टदेशं ( लोकान्तरं ) प्रहिणोमि प्रस्थापयामि । असौ मानुषानत्तुमभिलष्यतीत्यमङ्गलत्वात् यमराज्यं यमाधिकारं गच्छतु । किम्भूतः ? रिप्रवाहः रिप्रं पापं वहतीति कर्मण्यण् (पा० ३।२।१) तथाच निरुक्तम् "रिपोरिप्रमिति पापनामनी भवतः" ( ४।२१ ) इति । अत्राङ्गिराः-

"सर्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखः । विश्वरूपो महानग्निः प्रणीतः सर्वकर्म्मसु" इति । इदञ्च ध्यानपरम् । स्वरूपाख्यानस्य प्रयोजनान्तराभावादिति द्रष्टव्यम् ॥ यथाहुः "अविदित्वा तु योऽग्निं होमयेदविचक्षणः । न हुतं न च संस्कारो न स कर्म्मफलं लभेत् ॥ ज्ञात्वा स्वरूपमाग्नेयं योऽग्नेराराधनञ्चरेत् । ऐहिकामुष्मिकैः कामैः सारथिस्तस्य पावकः ॥ आहूयैव तु होतव्यं यो यत्र विहितो भवेत्" इति । अत्र "तमिति" शेषः । एवञ्च स्थापनावसरे सर्वत्र विश्वरूप एवाग्निरुक्तरूपोध्यातव्यः । ततोविशेषतो यस्मिन्कर्मणि योऽग्निरुक्तः स चिन्तनीयः । तमाह-गृह्यासङ्ग्रहः-

"लौकिके पावकोह्यग्निः प्रथमः परिकीर्त्तितः ।
अग्निस्तु मारुतोनाम गर्भाधानेऽभिधीयते ॥
पुंसवने चन्द्रनामा शुङ्गाकर्मणि शोभनः ।
सीमन्ते मङ्गलोनाम प्रगल्भाजातकर्म्मणि ॥
नाम्नि स्यात्पार्थिवोह्यग्निः प्राशने च शुचिस्तथा ।
सत्यनामा च चूडायां व्रतादेशे समुद्भवः ॥
गोदाने सूर्यनामा स्यात्केशान्ते ह्यग्निरुच्यते ।
वैश्वानरोविसर्गे च विवाहे योजकः स्मृतः ॥
चतुर्थ्यान्तु शिखो नाम धृतिरग्निस्तथा परे ।
प्रायश्चित्ते विधुश्चैव पाकयज्ञे च साहसः ॥
लक्षहोमे च वह्निः स्यात्कोटिहोमे हुताशनः ।
पूर्णाहुत्यां मृडोनाम शान्तिके वरदस्तथा ॥
पौष्टिके बलदश्चैव क्रोधोऽग्निश्चाभिचारिके ।
कोष्ठे तु जाठरोनाम क्रव्यादामृतभक्षणे ॥"

इति । व्रतादेश उपनयनम् । व्रतस्य ब्रह्मचर्यस्य तत्र क्रोडीकारात् ॥ ततश्च तन्तमग्निमावाह्य स्थापयित्वा सम्पूज्य च होतव्यमिति सकलवाक्यपर्यवसितार्थ इति ध्येयम् ॥ वह्निस्थापनानन्तरञ्च "इहैवायमितरोजातवेदा देवेभ्योहव्यं वहतु प्रजानन्" इति मन्त्रेणाग्नेरुपस्थानं, मन्त्रलिङ्गात् । मन्त्रार्थस्तु-अयमितरः क्रव्यादादन्योमङ्गल्यः । इहैव मदीयगृह एव जातवेदाः जातप्रज्ञः जातधनोवा । वेत्तेर्ज्ञानार्थाल्लाभार्थाद्वा असुन् ( उ० ४।१८८ ) अग्निः । वेद इत्यसुबन्तोधननामसु ( निघं० २।१०।४ ) पठ्यते । प्रजानन्-

पादानमाह—गृह्यासङ्ग्रहः—

"कपालैर्भिन्नपात्रैर्वा न त्वामैर्गोमयेन वा ।
अग्निप्रणयनङ्कार्यं यजमानभयावहम् ॥
अल्पः प्रणीतोविच्छिन्नोऽसमिद्धश्चापरिश्रुतः ।
त्वरया पुनरानीतोयजमानभयावहः ॥
तस्माच्छुभेन पात्रेण अविच्छिन्नाकृशं बहु ।
अग्निप्रणयनं कुर्याद्यजमानसुखावहम् ॥
शुभं पात्रन्तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बुधः ।
तस्याभावे शरावेण नवेनाभिमुखञ्च तम् ॥" इति ।

यत्तु—"शरावे भिन्नपात्रे वा कपाले वोन्मुकेऽपि वा ।
नाग्निप्रणयनं कुर्याद्व्याधिहानिभयावहम्" ॥

इति स्मृत्यन्तरन्तदुदाहृतवचनविरोधात्कौथुमादिव्यतिरिक्तविषयम् । कांस्यादिपात्रसद्भावे शरावनिषेधकमिति राघवभट्टप्रभृतयः ॥ ११ ॥

एवं लक्षणादिकर्म्माभिधायाथान्यानपि आधानकालानुपदिशति—त्रिभिः सूत्रैः

**प्रेते वा गृहपतौ परमेष्ठिकरणम् ॥ १२ ॥**

वा–अथवा गृहपतौ गृहस्वामिनि पितरि । अत्र वा शब्दोवैकल्पिकत्वमस्य ( आधानकालस्य ) दर्शयति(१) । प्रेते–इति प्रपूर्वो "इण्गताचि"–ति (अ० प०) धातोः "गत्यर्थाकर्मके"–( पा० ३।४।७२ )–त्यादिना कर्त्तरि क्तः । प्रकर्षेण इते गते अस्माल्लोकाल्लोकान्तरं , मृते इति तदर्थः । भ्रातृमतस्तु ज्येष्ठेन सर्वानुमतेन पैतृकधनविभागकाले(२) परमेष्ठिकरणम् । परमे श्रेष्ठे स्थाने ति-

स्वीयमधिकारं प्रकर्षेण जानानः । देवेभ्योऽस्मत्प्रत्तं हव्यं हवनीयं ( हविः ) वहतु-प्रापयतु । इति ॥

(१) वस्तुतस्त्वनास्थायाम् । अग्रिम-( १।१।२० )—सूत्रदर्शनेन कालद्वयस्यैव मुख्यत्वेन सूत्रकृतापसंहृतत्वावगमात् ॥

(२) एतच्च गौतममतम् । वस्तुतस्त्वेतज्ज्येष्ठक्रमन्नानुरुन्धे । पृथक् पृथक् धनस्वाम्यात् । यद्येकत्र तिष्ठेत्तदा तत्र—"ज्येष्ठः कुर्यात्तथाधानम्" इति कात्यायनस्वरसः । तथाच गौतमः । "भार्यादिरग्निर्दायादिर्वा" इति । "दायाद्यकाल एकेषाम्" इति च गृह्यान्तरम् । दायः पैतृकन्धनम् । परेते हि गृहस्वामिनि दायसम्बन्धः पुत्राणामिष्यते । "ऊर्ध्वम्पितुश्च मातुश्च समेत्य भ्रातरस्समम् । भजेरन्पैतृकमृक्थमनीशास्ते हि जीवतोः ॥ इति "पितर्युपरते पुत्रा विभजेयुर्धनं पितुः । अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते" इति चैवमादि । तच्चैकादशेऽहनि स्यात्प्रागनधिकारात् । दोषश्चाऽयथाविनियोक्तृत्वादिः । तथाच याज्ञवल्क्यः "अयथा विनियोक्ता च न विभागे पिता प्रभुः" इति । कर्कोपाध्यायास्त्वाहुः व्यवस्थितोऽयं गौतमाद्युक्तोविकल्पः । अभ्रातृकस्य दारकालः । भ्रातृमतोदायाद्य-

त्रिष्वपि (१)"चक्षुरसी"ति मन्त्रमनु(२)बध्नीयादित्यर्थः ॥ २२ ॥

**मेखलामवमुञ्चते "उदुत्तमं मरुणपाशमि"-ति ॥२३॥**

( मं० ब्रा० १।७।१० )

अवमुञ्चते—अवाचीनं मुञ्चति । "उदुत्तमम्" इति मन्त्रेण । मुञ्चत इति वच्छेदनप्रतिषेधार्थम् । अव इत्यधस्तान्मोचनार्थम् । अस्मिन्नेवावसरेऽजिनपरित्यागोऽपि । स्नानोत्तरं तद्धारणानौचित्यात् । "स्नानादूर्ध्वं गृही भवेदि"-ति वचनात् । पद्धतिरप्येवम् ॥

मन्त्रोयथा—

"उदुत्तमम्वरुणपाशमस्मदवाधमं विमध्यमँ श्रथाय ।
अथादित्यव्रते वयन्तवानागसोअदितयेस्याम ॥" १० ॥

इति । अस्यार्थः । हे 'वरुण' देव ! 'उत्तमम्' उत्तमाङ्गे ( शिरसि ) स्थापितं त्वदीयं पाशम् । 'अस्मत्' अस्मत्तः सकाशात् । 'उत्-श्रथाय(३) । उत्कृष्योन्मुच्य विनाशय । एवम् 'अधमम्' अधमाङ्गे ( पादप्रदेशे ) स्थापितन्त्वदीयं पाशम् 'अव' (४)अवाचीनं कृत्वा ( ऽस्मत्तोऽपकृष्य ) विनाशय । 'मध्यमं' मध्यमप्रदेशे स्थितं पाशं 'वि' विश्रथाय । विमोच्य ( विच्छेदय ) 'अथा' अथ (५)पाशत्रयविमोचनानन्तरम् । हे 'आदित्य' आदितिपुत्र वरुण ! 'अनागसः' अनपराधाः । ( निष्पापाः ) वयं 'तव' 'व्रते' कर्मणि(६) । ( निघं० १।७) वर्त्तमानाः सन्तः 'अदितये' अदीनतायै । (७)'स्याम' भवेम । (अखण्डित(८)

---

( १ ) विहारपक्षेतावत्त्रयाणाम्मन्त्राणामेकैकस्व मन्त्रस्य खल्वेवमेकैकस्मिन् उपस्थाने विनियोगः सम्पन्नः । चतुर्थस्य तु मन्त्रस्य सन्ध्यात्रयेऽपि अत्र विनियोगोऽनेन सूत्रेण क्रियते ॥

( २ अनु-प्रातरादिमन्त्राणां पश्चात । बध्नीयाद्-ग्रथयेदित्यर्थः । तथा च यथालिङ्गं मन्त्रमुच्चार्य चक्षुरसीति च पश्चादुक्का सर्वत्रोपतिष्ठेत ॥

( ३ ) "श्रथमोक्षणे" ( चु०उ० ) णिचिमित्त्वाद्ध्रस्वः । लोटि मध्यमपुरुषैकवचनेरूपम् । श्रथायेतिदीर्घश्छान्दसः । ( पा० ६।३।१३७ ) यद्वाश्रन्थविमोचनप्रतिहर्षयोः" ( क्या० प० ) लोटि मध्यस्यैकवचने "छन्दसि शायजपी" ( पा० ३।४।८४)-ति नः शायजादेशे तस्य ङित्वान्न लोपे श्रथाये तिरूपम् ॥

( ४ ) उपसर्गस्यपृथग्भावश्छान्दसः । ( पा० १।४।८२ ) उपसर्गबलाद्योग्यक्रियाध्याहारे प्रसक्ते प्रकान्त एवाध्याहृतः । एवमग्रेऽपि ॥

( ५ ) "निपातस्य चे"-( पा० ६।३।१३६ )-ति दीर्घः ॥

( ६ ) तथा च निरुक्तम् "व्रतमिति कर्म्मनाम वृणोतीतिसतः" ( २।१३ ) इति ॥

( ७ ) तथा च निरुक्तम् "अदितिरदीना देवमाता चे"ति ( ४।४।२२ ) अत्र च "दूव्येकयोरि" ( पा० १।४।२२ ) ति वद्भावप्रधानोनिर्देशो दीनतेति ॥

( ८ ) "दो अवखण्डने" (दि०प०) क्तिन्भावे "द्यतिस्यतिमास्थामितिकिति" ( पा० ७।४।४ ) इतीत्वेदितिस्ततो नञ्समासः । भावप्रधानश्च निर्देश इतीत्थं व्याख्यातम् ॥

त्वाय योग्या भवेम् )॥ १० ॥ इति ॥ २३ ॥

**ब्राह्मणान्भोजयित्वा स्वयञ्च भुक्त्वा केशश्मश्रुलोमनखानि वापयति शिखावर्जम् ॥ २४ ॥**

ब्राह्मणान् भोजयित्वेति। अभ्युदयिकश्राद्धङ्कृत्वेत्यर्थ इति भट्टनारायणः। यत्तु कर्म्मसमाप्तिनिमित्तकमेवेदं ब्राह्मणभोजनमितिस्नानात्प्रागे(१)वैतच्छ्राद्धम्। इदानीं ब्राह्मणभोजनमात्रमिति च मतं तन्न इदानीङ्कर्म्मसमाप्त्यभावादुपरिष्टादपि कर्म्मान्तरोपदेशात्। वस्तुतो ब्राह्मणभोजना(२)न्तरमेवेदम्। स्वयञ्चेति। "दधितिलान्वे"तिशेषः। तथाच पारस्करः "दधितिलान्वाप्राश्ये"-ति। पद्धतिरप्येवम्। कश्चित्तु परकीयग्रहणे आकाङ्क्षाविरहात् ब्राह्मणभोजनसाहचर्य्याच्च यथेष्टमेवभोक्तव्यमित्याह।

अत्र शिखावर्जमित्यभिधानात्प्राक्सशिखं वपनं कर्त्तव्यमितिदर्शितम्। ( २।९।२५ ) उपनिषच्च "भ्रूप्रकोष्ठशिखावर्जं सर्वगात्राणि वापयेत्" इति॥२४॥

**स्नात्वालङ्कृत्याहते वाससी परिधाय स्रजमाबध्नीत "श्रीरसि मयि रमस्वे"ति ॥ २५ ॥**

( मं० ब्रा० १।७।११ )

अलङ्कृत्य-कुण्डलादिभिरात्मानम्। अहते-"ईषद्धौतन्नवमि"त्याद्युक्तलक्षणे। वाससी वस्त्रयुगम्। ( अन्तरीय-मुत्तरीयञ्च ) परिधाय। स्रजम्-पुष्पमालाम् आ-उपरि-शिरसि। बध्नीत। तत्रमन्त्रमाह "श्रीरसी"ति(३)। अस्यार्थः। हे माले! त्वं 'श्री.' लक्ष्मीः। 'असि' भवसि। सात्वं 'मयि' विषये। 'रमस्व' अवस्थानं कुरु। इति। यज्ञोपवीतद्वितयपरिधानमपीदानीमेवाचारादितिमुरारिमिश्राः प्राहुः॥ २५॥

**"नेत्र्यौ स्थोनयत मामि"-त्युपानहौ ॥ २६ ॥**

( मं० ब्रा० १।७।१२ )

---

(१) अभिषेकात्मकं स्नानं प्रधानकर्मेतिप्रतिपन्नम्। अग्रिमसूत्रे(२५)स्नात्वा इति तुवपनोत्थाप्रत्यवायापनोदनार्थंस्नानमुच्यते। नत्वेतत्प्रधानङ्कर्म्म। न हि भुक्त्वाप्रधानङ्कर्म्मक्रियते। न वा प्रधानं स्नानममन्त्रकं तदङ्गस्त्वभिषेकामन्त्रवानितिसाम्प्रतं तस्मात्प्रधानकर्म्मणः पश्चादाभ्युदयिकं श्राद्धमितिवर्णनं भाष्यकृतोऽनुपपन्नमेव। तत्खलुपुरस्तादेवकर्म्मणो यथाप्राप्तङ्कर्त्तुमुचितम्। "यच्छ्राद्धं कर्मणामादौ अन्वाहार्य्यन्तदुच्यते" इति वृद्धिश्राद्धमधिकृत्यकर्म्मप्रदीपवचनात्। अतएकस्मिन्दिनेऽनेककर्म्मानुष्ठितानेकदैवतदनुष्ठानं व्यवस्थापितमधस्तात्।

(२) "सम्भोज्यभिप्रान्भुञ्जीते"-ति प्रतिविशिष्टभोजनस्य मेवात्रमूलम्।

(३) अत्रापि "सर्वेषु गात्रेषु शिरःप्रधानम्" इति न्यायोऽनुसृतः।

"नेत्र्यौस्थ" इतिमन्त्रेण। उपानहौ आवध्नीतेत्यनुषज्यते। अत्राङ्घोऽर्थे योग्यतावशात्तेनपादयोः। "नानार्थाह्यव्ययाः परे" इत्याग्नेयमभिधानम्। मन्त्रार्थस्तु—

हे उपानहौ! यतो युवां 'नेत्र्यौ' नयन-(गमन-) शक्तिप्रदे 'स्थः' भवथः। अतो 'माम्' इष्टं देशान्तरम 'नयतम्' प्रापयतम्। प्रार्थनायां लोट्॥ २६॥

**"गन्धर्वोऽसी"-ति वैणवदण्डं गृह्णाति॥ २७॥**

( मं० ब्रा० १।७।१३ )

वैणवम्। वेणुर्वंशस्तन्मयम्। दण्डादिधारणे स्मृत्यन्तरोक्तम्मानान्तरमाहुर्म्मुरारिमिश्राः:—

"वैणवीन्धारयेद्यष्टिमन्तर्वासस्तथोत्तरम्।
यज्ञोपवीतद्वितयं सोदकञ्च कमण्डलुम्॥
छत्रञ्चोष्णीषममलं पादयोश्चाप्युपानहौ।
रौक्मे च कुण्डले चैवं कृत्तकेशनखोद्विजः॥" इति॥ २७॥

**आचार्यंसपरिषत्कमभ्येत्याचार्यपरिषदमीक्षते-**
**"यक्षामिव चक्षुषः प्रियोवोभूयासमि"ति॥ २८॥**

( मं० ब्रा० १।७।१४ )

सपरिषत्कम्। परिषदा सभया सहितम्। "समज्यापरिषद्गोष्ठीसभासमितिसंसदः" इत्यमरः। सा च शिष्यादेः। अभ्येत्य-आभिमुख्येन गत्वा पुनराचार्यवचनमाचार्यसहितायाः परिषद ईक्षणार्थम्। मन्त्रार्थस्तु-हे सपरिषत्काचार्य्याः! गुरुत्वादत्र बहुवचनम(१)। 'चक्षुष' इति जात्येकवचनम्। 'यक्ष इव' यक्षो यथा दर्शनीयतया प्रियो भवति तथाहं 'वः' युष्माकं 'प्रियः' 'भूयासम्' भवेयमिति॥ १४॥ २८॥

**उपोपविश्य मुख्यान्प्राणान्संमृशन् "ओष्ठापिधाना नकुली-"ति॥२९॥**

( मं० ब्रा० १।७।१५ )

उप-आचार्य्यसमीपे। मुख्यान्-मुखेभवान्। प्राणान्-वायून्। तेषाममूर्त्तत्वात् तदायतनानि संमृशन्-स्पृशन्। "ओष्ठापिधाना" इत्येतदादिकं मन्त्रं "जपेदि"-ति शेषः सर्वत्र। मन्त्रो यथा—

"ओष्ठापिधाना नकुली दन्तपरिमितः पविः।
जिह्वे मा विह्वलो वाचं चारु माद्येह वादय॥ १५॥" इति।

अस्यार्थः-स्नातकेन जिह्वा स्वा प्राथ्र्यते-हे 'जिह्वे' 'इह' प्रस्तुते कर्म्मणि।

---

(१) तथाच स्मर्यते-"एकत्वं न प्रयुञ्जीतगुरावात्मनि चेश्वरे" इति। एकत्वमेकवचनम्।

'अद्य' त्वं 'मा विह्वल' विश्लथस्खलनं मा विधेहि । उः (१)पादपूरणे । किन्तु 'मा' माम् । 'चारु' शोभनं यथा स्यात्तथा 'वाचं'(२) 'वादय' । यतस्त्वम् 'ओष्ठापिधाना' ओष्ठावपिधान(३)मावरणं यस्याः सा । तथा 'नकुली' कुक्कुटीव । नकुलपत्नीव वा चञ्चलस्वभावा(४) । अत्र सादृश्यमूलकस्तत्वारोपः । एवमग्रेऽपि । तथा 'दन्तपरिमितः पविः' (५)दन्तावरणभूता वज्रवत्त्वं भवसि ॥१५॥

**अत्रैनमाचार्योऽर्हयेत् ॥ ३० ॥**

अत्र—एतस्मिन्नवसरे । एनं—स्नातकम् । आचार्य "उत्तरतोगाम्" ( ४।१०।१ सू० ) इत्यादिना वक्ष्यमाणेन विधिना अर्हयेत्—पूजयेत् । तथाच मनुः—

"तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः ।
स्रग्विणन्तल्प आसीनमर्हयेत्प्रथमं गवा ॥"

इति । तं स्नातकम् । स्वधर्म्मेण स्वधर्म्मानुष्ठानेन प्रतीतं—ब्रह्मचर्यमारभ्य-(६)ख्यातम् । पितुः—पितुतः । दीयत इति दायः । ब्रह्म एव दायो ब्रह्मदायस्तस्य हरम् । पितृतो(७)गृहीतवेदमित्यर्थः । स्रग्विणं—मालयाऽलङ्कृतं तल्पे—उत्कृष्टशय्यायाम्(८) । आसीनमुपविष्टम् कृत्वा प्रथमं विवाहात्प्राक् । गवा—गोसाधनमधुपर्केण । पिता अन्यो वा वरयिता अर्हयेत्-पूजयेत । इत्यर्थः । अत्र केचित् "कर्म्मणःकरणसंज्ञासम्प्रदानस्य च कर्म्मसंज्ञा" ( पा० ।२३।१३ वा० ) इति विभक्तिव्यत्ययदर्शकेन गान्तस्मैद(९)द्यादित्यप्यर्थमाहुः ॥ ३० ॥

**गोयुक्तं रथमुपसङ्क्रम्य पक्षसी कूबरं बाहुं(१०)वाऽभिमृशेत् । "वनस्पते वीड्वङ्गोहि भूया" इति ॥३१॥**

( मं० ब्रा० १।७।१६ )

---

( १ ) तथा च निरुक्तम् । "अथापि पदपूरणः । इदमु तदु" ( २-२-९ ) इति ।

( २ ) ब्रुविणा समानार्थत्वाद्द्विकर्म्मकता ( पा० १।४।५१ ) ।

( ३ ) "तथाचामरः अपिधानतिरोधानपिधानाच्छादनानि चे"ति ।

( ४ ) "नकुली कुक्कुटीमांस्योः पशुपाण्डवयोः पुमान्" इति मेदिनी । अत्र पशुश्चतुष्पाज्जन्तुविशेषएव ।

( ५ ) "ह्रादिनी वज्रमस्त्रीस्यात्कुलिशम्भिदुरं पविः" इत्यमरः ।

( ६ ) "प्रतीते निपुणख्यातवित्तविज्ञातविश्रुताः" इत्यमरः ।

( ७ ) उपलक्षणमेतदाचार्यादेः । "पितैवोपनयेत्पुत्रम्" इत्यादिना पितुरेवोपनयने मुख्यः अधिकारः । "उपनीयगुरुःशिष्यं शिक्षयेच्छौचमादितः । आचार्यमग्निकार्यञ्च सन्ध्योपासनमेव चे"ति च मनुःस्मरति । पितुरभावेऽन्योऽपि तत्स्थानीयः सगोत्रः ।

( ८ ) "तल्पन्तु शयनीये स्यादि"ति विश्वः ।

( ९ ) गोदानमत्रगार्हस्थ्यधर्म्मप्रतिपालनार्थम् तां विनाऽग्निकार्यासम्भवतीति ।

( १० ) अत्र कूबरबाहू वेति चन्द्रकान्तभाष्यकृद्धितः पाठः । कूबरो युगन्धरः ।

गोभिर्य्युक्तं रथम् । उपसङ्क्रम्य-सम्यगुपेत्य । पक्षसी(१)-चक्रे । कूवरं-रथिस्थानम् । बाहुं-चक्रालम्बिकीलकं वा । अभिमृशेत्-स्पृशेत् । "वनस्पते" इति मन्त्रेण पादत्रयेण ।

मन्त्रोयथा—

"वनस्पते वीड्वङ्गोहि भूया अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः सन्नद्धो असि वीड्यस्वास्थाते जयतु जेत्वानि ॥" १६ ॥

इति । अस्यार्थः । हे 'वनस्पते'! वनस्पति-( वृक्ष- ) (१)विकाररथ ! त्वं 'वीड्वङ्गः' संस्तब्धाङ्गोदृढावयवः । वीड्यतिः संस्तम्भनकर्म्मा नैरुक्तो धातुः । ततो "भृमृशी"त्यादिना ( उ० १।७ ) उप्रत्ययो बाहुलकात् । संस्तब्धोदृढ़ाभवत्यनेनेति । संस्तभ्यन्ते शत्रवोऽनेनेति वा वीडु-बलिष्ठम् ( निघं० ३।९।१५ ) वीडूनि-दृढ़ानि महाभारसहानि अङ्गानि चक्रकूबर(२)प्रभृतीनि यस्यसः । तथा 'अस्मत्सखा' वयंसखायोयस्य तादृशश्च 'भूयाः' भव । किञ्च 'प्रतरणः' प्रकर्षेण तर(३)न्ति दुर्गाणि येन सः । 'सुवीरः' शोभनाः वीराः शूरभटाः पुत्रादयोवा यस्मा(४)त्सः । एवम्भूतोभव । त्वं 'गोभिः' वृषभैः 'सन्नद्धः' संयुक्तः (५)'असि' भवसि । अतस्त्व(६)मस्मानपि 'वीडयस्व' दृढीकुरु(७) । किञ्च 'ते' तव 'आस्थाता' आरोढ़ा ( त्वय्यवस्थितोरथी ) 'जेत्वानि' जेतव्यानि द्विषद्वृन्दानि(८) 'जयतु' अभिभवतु(९) ॥ १६ ॥ इति ॥ ३१ ॥

---

( यत्र रथस्याश्वा बध्यन्ते तत्काष्ठम् । युगकाष्ठबन्धनस्थानम् वा ) युगं वोढुर्बन्धनकाष्ठन्धारयतीति युगन्धरः । तस्य बाहू इव बाहू । कूबरबाहू-कूबरपार्श्वौ । तौ वा । कूबरोरथिस्थानं, तस्य बाहू कूबरबाहू-रथस्येषे इतिकेचिदित्येवं तद्व्याख्यानञ्च तत्रैव भाष्ये ।

( १ ) अमरकोशे वृक्षपर्याये "वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिरि-"त्युक्तम् । तदत्र तद्विकारेऽपि तच्छब्दप्रयोगः फलवत् ॥

( १ ) "पक्षसी च स्मृतौ पक्षौ" इति अमरटीकायां व्याख्यासुधायां शुभाङ्कः ।

( २ ) "कूबरस्तु युगन्धरः" इत्यमरः ।

( ३ ) प्रवर्द्धयितेतिसायणः । करणे ल्युट् । (पा० ३।३।११७) योरनः (पा० ७।१।१) ।

( ४ ) एतद्विशेषणेनास्य शुभावहत्वमाशास्यते । अत्र-सुसारथिरिति गुणविष्णुः ।

( ५ ) सायणस्तु-गोभिर्गोविकारैश्चर्म्मभिः । सन्नद्धः सम्यग्बद्धः । तचाच निरुक्तम् । "अथापि चर्म च श्लेष्मा च गोशब्देनोच्यते । पृथगोभिः सम्बद्ध इति" इति । (२।६)

( ६ ) यतस्त्वं वीड्वङ्गः । ( ७ ) दृढावयवान्कुरु ।

( ८ ) शत्रुसैन्यानि । "जिजये" ( भ्वा० प० ) "कृत्यार्थेतवैकेन्केन्यत्वनः" ( पा० ३।४।१४ ) इति तव्यार्थे त्वन्प्रत्ययः ।

( ९ ) "जिभि अभिभवे" ( भ्वा०प० ) अभिभवोन्यूनीकरणं न्यूनीभवनञ्च । आद्येसकर्म्मकोद्वितीयेऽकर्मकः ।

ततोरथमारुह्य—

**"आस्थाता ते जयतुजेत्वानी"–त्यातिष्ठति ॥ ३२ ॥**

"आस्थाता ते" इतिमन्त्रचतुर्थपादेनर थमातिष्ठति–आरोहति(१) ॥३२॥

**प्राङ्वोदङ्वा अभिप्रयाय प्रदक्षिणमावर्त्योपयाति ॥ ३३ ॥**

ततः प्राङ्–मुख–उदङ्मुखोवा । अभिप्रयाय–सर्वतोभावेन प्रकर्षेण गत्वा प्रदक्षिणं दक्षिणेन प्रगतं यथास्यात्तथा आवृत्त्य–आवर्त्तनङ्कृत्वा । उपयाति–उपयायादाचार्यसमीपमागच्छेत् ॥ ३३ ॥

**उपयातायार्घ्यमिति कौहलीयाः ॥ ३४ ॥**

इति श्रीमद्गोभिलीयगृह्यसूत्रस्यतृ० प्र० के चतुर्थी कण्डिका ॥३॥४॥*॥

कौहलीयाः । शाखाविशेषाध्यायिनस्तु–रथादवरुह्याचार्यसमीपमुपयातायोपागताय स्नातकाय अर्घ्यमर्हण–माचार्येण पित्रा वा कर्त्तव्यन्न तु पूर्वमिति मन्यन्ते ॥ ३४ ॥

इति श्रीमद्गोभिलीयगृह्यसूत्रव्याख्यायाम्भूदुलाख्यायां मुकुन्दशर्म्मसङ्कलितायां तृतीयस्य प्रपाठकस्य चतुर्थी कण्डिका ॥ ३ ॥ ४ ॥*॥

( इति समावर्त्तनम् )

## अथार्हणाविधिप्रदर्शनाय चतुर्थप्रपाठकस्य दशमी कण्डिका

**उत्तरतोगां बध्वोपोत्तिष्ठेरन्–"अर्हणात्पुत्रवाससे"–ति ॥१॥**

( मं० ब्रा० १।८।१ )

अथ क्रमप्राप्तानामर्हणामन्त्राणां विनियोगं वक्तुमुपक्रमते–उत्तरत इति । उत्तरतः । उत्तरस्यांदिशि । सार्वविभक्तिकस्तसिः (पा० ५।४।४४ वा०) अर्थात् अर्हणप्रदेशस्य । "यत्रैनमर्हयिष्यन्तः स्युः" ( ४।१०।२ ) इत्युत्तरसूत्रात् । गां स्त्रीगवीम् । धेनुरित्यादिमन्त्रलिङ्गात् । उपतिष्ठेरन् । आराधयेयुः । उपात्तिष्ठतेर्देवपूजायामात्मनेपदविधानात् । ( पा० १।३।२५ वा० ) अत्रदेवेत्युपलक्षणं पूज्यमात्रस्येति गामेव । के ? येऽर्हयिष्यन्तः स्युः । तथा च सर्वै रेव गृहस्थितैरर्हणीयार्हणार्थमप्रमत्तैर्भवितव्यमिति तात्पर्यार्थः । मुरारिमिश्रास्तु—

अर्हणीयपरित्राणार्थमुपतिष्ठेरन्नित्युक्त्वा वाजसनेयश्रुतिन्दर्शयाम्बभूवुः–"यत्रचार्हन्नागच्छति सर्वे गृह्या इतरे तत्रतथेह परित्रातोभवती"–ति । गृह्या यजमानदायादाः । उपस्थानश्चेदमूर्ध्वस्थितेनैव कार्यम् । आचारात् । न्यायाच्च । नह्यर्हणीये ऊर्ध्वस्थिते स्वयमुपविशयत इति युज्यते । इति ॥ उप-

(१) रथे सम्यक् तिष्ठति । आङत्र मर्यादायाम् ।

स्थानमन्त्रमाह—"अर्हणे"ति । यथा

"अर्हणा पुत्रवाससा धेनुरभवद्य मे ।
सा नः पयस्वती दुहामुत्तरामुत्तरां समाम्" ॥ १ ॥

इति । अस्यार्थः 'य' (१)या 'इयं' अर्हणा (२)पूजा साधनभूता । 'पुत्रवाससा' (३)पुत्रवासानुगामिनी । 'मे' मम । 'धेनुः' सर्वार्थसाधिनी(४) 'अभवत्' भवति । 'सा' 'पयस्वती' प्रशस्तपयाः(५) । 'नः' 'अस्माकम् । "मनोरथान्" इति शेषः(६) । उत्तरामुत्तरां 'समाम्'(७) उत्तरोत्तरवर्षं व्याप्य 'दुहाम्' दुग्धाम्(८) ॥ १ ॥ इति ॥ १ ॥

एवमर्हणीयेषूपतिष्ठमानेषु स खल्वयमर्हणीयः—

**"इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामी"ति प्रतितिष्ठमानोजपेत् ॥ २ ॥**

( मं० ब्रा० २।८।२ )

प्रतितिष्ठमानः । ऊर्ध्वस्तिष्ठन् "इदमहमि"ति मन्त्रंजपेत् । अर्थाज्जपानन्तरमासन(९)उपविशेत् । अर्हणीय इत्यर्थात् । समस्तमन्त्राम्नानं स्वनामाध्याहारप्रतिषेधार्थम् । "अकर्मकाच्च" ( पा० १।३।२६ ) इत्यात्मनेपदम् । मन्त्रार्थस्तु—अर्हणीयोवदति-'अहम्' 'इदम्' आसनम् । 'इमां' च 'पद्याम्' पादा-

---

( १ ) "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्" ( पा० ६।३।६३ ) इति ह्रस्वः ।

( २ ) अर्ह्यते पूज्यतेऽनयेत्यर्थे "अर्हपूजाताम्" ( चु० उ० ) इत्यस्मात् "ण्यासश्रन्थोयुच्" ( पा० ३।३।१०७ ) इति करणे युच् । योरनादेशः ( पा० ७।१।१ ) स्त्रियां टाप् ( पा० ४।१।४ ) सुलोपः । पूजासम्पादिनी ।

( ३ ) पुत्रवासम्प्रति सीदतिगच्छतीति षद्लृधातोर्गत्यर्थात् (भ्वा०प०) "अन्येष्वपि दृश्यते" ( पा०३।२।१०१ ) इति डप्रत्ये टिलोपः । ( पा० ६।४।१४३ ) नवप्रसूतत्वात् ।

( ४ ) दधातेर्धारणपोषणार्थस्य ( जु०उ० ) "धेन्वादयश्चे"-ति मुकुटेन निपातितः ।

( ५ ) प्रशंसायामत्र मतुप् । ( पा० ५।२।९४ ) मस्यवः । ( पा० ८।२।९ ) तथा चोक्तम् "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुवादयः" इति ।

( ६ ) "सम्बन्धिशब्दः सम्बन्धिनमाक्षिपती"तिन्यायात् ।

( ७ ) अत्यन्तसंयोगे द्वितीया । ( पा० २।३।५ ) "संवत्सरोवत्सरोऽब्दोहायनोऽस्त्रीशरत्समाः" इत्यमरः । यद्यपि समाशब्दो नित्यबहुवचनान्ततया कोशे पठ्यते तथापि "समां समां विजायते" (पा० ५।३।२२) इति पाणिनिनैकवचनान्तोऽपि स्मृतः । श्रुतश्चाऽपि । ( ८ ) "लोपस्त आत्मने पदेषु" ( पा० ७।१।४१ ) इति तलोपः ।

( ९ ) इदमासनमधितिष्ठामीतिमन्त्रलिङ्गात् । उपवेशनञ्चेदम्प्राङ्मुखत्वन्तत एव । साम्मुख्याय । विवाहाङ्गेऽर्हणे तथोक्तत्वाच्च । ( २।१।१७ ) अत्र " पूज्यपूजकयोर्मध्ये प्राची"-ति तन्त्रान्तरस्वारस्यादात्प्रत्यङ्मुखता दातुनं दोषायेत्यवगन्तव्यम् ।

द्यीम् । (१)कथम्भूताम् ? 'विराजम्' विराजमानाम् । क्विबन्तमेतत् । 'अन्न-ञ्चतदाद्यमदनीयञ्चेतिकर्म्मधारयः । यद्वा-अन्नाद्याय-(२) अन्नादौभवाय सुखाय । 'अधितिष्ठामि' आक्रामामि ॥ २ ॥ इति ॥ २ ॥

कुत्र प्रतितिष्ठमानोजपेदित्यपेक्षायामाह—

**यत्रैनमर्हयिष्यन्तः स्युः ॥ ३ ॥**

यत्र-यस्मिन्प्रदेशे । एनम् अर्हणीयम् । अर्हयिष्यन्तः। अर्हयितुमिच्छन्तः। अर्हणकर्तारः । उपस्थिताः । स्युर्भवेयुः । तत्रेत्यर्थः ॥ ३ ॥

**यदावाऽर्हयेयुः ॥ ४ ॥**

यदा यस्मिन्काले । अर्हयेयु-रर्हणङ्कर्त्तुमारभेरन्नित्यर्थः । अत्र वाकारः समुच्चय इति मुरारि(३)मिश्राः ॥ ४ ॥

अथेदानीमर्हणाविधिविवक्षयेदमाह—

**विष्टरपाद्यार्घ्याचमनीयमधुपर्कानेकैकशस्त्रिर्वेदयेरन् ॥ ५ ॥**

विष्टरः-पूर्वोक्तः । (४)"वृक्षासनयोर्विष्टरः" ( पा० ८।३।९३ ) इत्यासनार्थे निपातितः । पाद्यं-(५) पादार्थमुदकम् । एवमर्घ्यम् । "पादार्घाभ्याञ्चे"-(पा०५।४।२५)-ति तादर्थ्ये यत प्रत्ययः । तदेतद्दधितण्डुलपुष्पयुक्तमुदकम् ।

( १ ) पादवद्ध्रीमिति गुणविष्णुः । "पादार्घाभ्यां च" ( पा० ५।४।२५ ) इति तादर्थ्ये यत्प्रत्ययः ।

( २ ) अत्र "भवेच्छन्दसि" ( पा० ४।४।११० ) इति यत्प्रत्ययः ।

( ३ ) तथा चास्य गतेनाभिसम्बन्धः । तदा वा प्रतितिष्ठमानोजपेदिति । न तु अर्हणकर्तृषु कार्यान्तरव्यग्रेषु प्रत्युपस्थानमेवेति । चन्द्रकान्तस्तु-वा शब्दस्तुशब्दार्थे । यदा पुनरेनमर्हयेयुस्तदा विष्टरादीनि वेदयेरन्नित्यनागतेनाभिसम्बन्ध इत्यर्थम्मतान्तरेण वर्णयाञ्चकार ।

( ४ ) अत्र दर्भसंख्यानियमोनादृतः । छन्दोगपरिशिष्टेकात्यायनेन "दर्भसंख्यानविहिता।विष्टरास्तरणेष्वपी"ति तदुक्तेः । गृह्यासङ्ग्रहे तु "पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्द्धेन तु विष्टरः" इत्युक्तपूर्वन्द्रष्टव्यम् । एवमङ्गिरसापि। तदनयोर्विकल्पः। अतएव भट्टनारायणः स्वभाष्ये-"सम्भवे पञ्चाशदर्द्धैरसम्भवे पुनरपरिमितैरपि कुशैर्विष्टरोभवती"त्युक्तवान् । अत्र कुशैरित्युपलक्षणम् । कुशपत्रैरपि । अत एव पद्धतिकृतोऽपि तथैव लिखन्ति । अयन्तार्णः पार्णोपीति स्मृत्यन्तरावगतमित्यवोचाम ।

( ५ ) तदेतद्विवृतमुखतैजसबृहत्पात्रस्थं, यतोऽञ्जलिनाऽपआदातुं शक्यते । तथाच वीरपद्धतिः । "ततो भाजनस्था अप उपनीय पाद्याः ३ इति त्रिरन्यैरुक्ते ॐ पाद्याः प्रतिगृह्यतामिति यजमानेनोक्ते ॐ यतो देवीः × × × रागच्छतु" इतिभाजने अपःप्रेक्षते "ततस्ताभ्योऽञ्जलिङ्गृहीत्वे"ति ॥ अत्र पाद्याः इति अप्सम्बन्धात्स्त्रीबहुवचनम् । "अपःप्रेक्षते"-(१)इतिसूत्रदर्शनात् । एवमेव भवदेवभट्टादयोऽपि । अतएव गृह्यान्तरवत् पाद्यमित्यसमस्तमिहसूत्रितम् ।

तथा च गृह्यासङ्ग्रहे कात्यायनः ॥

"दध्यक्षतं सुमनस आपएतच्चतुष्टयम् ।
अर्घ्यमेतत्प्रदातव्यं गृह्येऽर्घ्यार्हाः स्मृतास्तु ये ॥"

इति। अत्र "तेभ्य" इति शेषः। एतच्च न पात्रानवस्थितं, न चैकेन पाणिना गृह्णीयात्।

"कांस्येनैवार्हणीयस्य (१)निनयेदर्घ्यमञ्जलौ।"

इति कात्यायनवचनात्। आचमनीयम्-आचमनार्थमुदकम्(२)। "वृद्धाच्छः" ( पा० ४।२।११४ ) इति छस्तस्येयादेशः। ( पा० ७।१।२ ) मधुपर्कश्च- "साक्षतं सुमनोयुक्तमुदकन्दधिसंयुतम्। अर्घ्यं। "दधिमधुभ्याञ्चमधुपर्को विधीयते" इति छन्दोगपरिशिष्टोक्तेः। तत्र चकारोवस्त्वन्तरसमुच्चायकः। तथा च दधिमधुयुक्तमुदकम्। दधिमधुघृतंवा। दधिमधुदुग्धंवा (३)मधुपर्कः। स्मृतिः—

"सर्पिषा मधुना दध्ना चार्घ्यार्हानर्हयेत्सदा।
दधिक्षौद्रपयोभिर्वामधुदध्युदकेन वा ॥"

इति। ऐच्छिकोऽत्र विकल्पोऽव्यवस्थापकाभावात्। गृह्यासंग्रहे—

"कांस्ये त्रितयमादाय कांस्येन परिबृंहितम्।
परिग्रहेषु देयं स्यान्मधुष्पर्क इति ध्रुवम् ॥"

इति। परिबृंहितं-संवृतमाच्छादितमितियावत्। ऋष्यशृङ्गः—

"कांस्यापिधानं कांस्यस्थं मधुपर्कं समर्पयेत्।

इति। पिधानपात्रमत्राधारपात्रापेक्षया बृहत्कार्षम्-"वर्षीयसा पात्रे णपिहि-

( १ ) कांस्यपदमत्र प्रशस्तपात्रमात्रपरम्।"सा तस्यै प्रददौ कांस्यं सपिधानं हिरण्मयम्" इति विराटपर्व (भा०) दर्शनेन तथा निर्णयात्। सा-सुदेष्णा। तस्यै-सैरन्ध्र्यै। अतएव पद्धतिरपि जलादियुक्तं पात्रं गृहीत्वेति। इतिमुरारिः। विवाहेतु शङ्खस्थ दूर्वाक्षत जलफलचन्दनयुतार्घ्यपात्रं गृहीत्वेति वीरेश्वरादयो लिखन्ति। तत्रार्हणीयस्य विष्णुरूपत्वाभिधानमत्रमूलम्। विष्णोश्चार्घ्यं शङ्खेनैव भवतीति निर्विवादम्।

(२) अत्र कालिकापुराणम्—

"दद्यादाचमनीयन्तु सुगन्धिसलिलैः शुभैः।
कर्पूरवासितैर्वापि कृष्णागुरुविधूपितैः ॥

यथातथासुगन्धैर्वा प्रसन्नैः फेनवर्जितैः। तत्तैजसेन पात्रेण शङ्खेनापि प्रदापयेदि"-ति।

"केवलन्तोयमात्रेण तद्वा दद्यान्न मिश्रितम्।
वासितन्तु सुगन्धाद्यैः कर्त्तव्यं यदिलभ्यते॥"

इति च। प्रदापयेत्-प्रदद्यात्। शङ्खेनेति विष्णुपूजाविषयम्। इति द्रष्टव्यम् ॥

( ३ ) अत्र तुरीयभेदं मधुपर्कस्य कृतान्ने मधु चेति व्याचक्षते। न तत्र कांस्यापेक्षा। एवम्मधुपयस्यपीति ॥

तमि"-त्याश्वलायनगृह्यात् । दध्यादिकञ्च तुल्यपरिमाणं ग्राह्यम् । "समंस्याद-श्रुतत्वात्" ( जै० सू० १०।३।१३ ) इति न्यायात् । केचित्तु—

"आज्यमेकपलं ग्राह्यन्दध्नस्त्रिपलमेव च ।
मधुनः पलमेकन्तु मधुपर्कः सउच्यते ॥"

इति मैत्रावरुणीयशाखापरिशिष्टोक्तं परिमाणमत्रापि ग्राह्यमित्याहुः । ताने-तान् विष्टरादीन्मधुपर्कान्तान् पञ्चद्रव्यविशेषान् । एकैकशः । प्रत्येकं, त्रिः । त्रिरुच्चार्य । वेदयेरन्-ज्ञापयेयुरर्हयितुरात्मीयाः (१) । ततश्चार्हयिता द्रव्यमु-क्त्वा(२) "प्रतिगृह्यतामि"ति सर्वत्र सकृद्वाक्यशेषं कुर्यादित्यर्थः ॥ ५ ॥

**"याओषधीरि"-त्युदञ्चं विष्टरमास्तीर्य्याध्युपविशेत् ॥ ६ ॥**
( मं० ब्रा० २।८।३-४ )

"याओषधीरि-"ति-अनया ऋचा उदञ्चम्-उत्तराग्रमर्हयित्रा प्रदत्तं विष्ट-रमास्तीर्य । आस्तरणञ्चासनेऽधः । "ता मह्यमस्मिन्नासने" इतिमन्त्रलिङ्गात् । अधि-तदुपरि । उपविशेत् । अर्थादर्हणीयः । अत्रोपवेशनस्य पूर्वतएव सिद्ध-त्वादधः करणरूपविष्टरस्यास्तरणेऽयम्मन्त्रोविनियुक्त इतिव्याख्यातारः ॥६॥

**द्वौ चेत्पृथगृग्भ्याम् ॥ ७ ॥**

आस्तीर्याध्युपविशेदित्यनुवर्त्तते । चेद्यदि । द्वौ विष्टरावर्हयित्रा प्रदत्तौ स्यातां तदा पृथक्-नाना ऋग्भ्याम् । "याओषधीरि"-त्येताभ्याम्(३) । अत्रचेदिति-वचनान्नातीव द्वयोरावश्यकत्वमिति प्रतीयते । तथाच ऋचौ—

"या ओषधीस्सोमराज्ञीर्बह्वीःशतविचक्षणाः ।
ता मह्यमस्मिन्नासने अच्छिद्राः शर्म्म यच्छत ॥ ३ ॥
या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ।
ता मह्यमस्मिन्पादयोरच्छिद्राः शर्म्म यच्छत ॥ ४ ॥"

इति । अनयोरर्थः । हे 'ओषधीः' ओषध्यः(४) ! 'याः' यूयं 'सोमराज्ञीः'

---

( १ ) नत्वर्हयिता । बहुवचननिर्देशात् । अत्र मुरारिमिश्राः । "सूत्रे बहुवचननिर्दे-शाद्विष्टरादिनिवेदनकर्तृनियमालाभात्तन्नियामकं "पारक्यमविरोधि यदि"-ति । न्यायेन "अन्यस्त्रिस्त्रिःप्राह विष्टरादीनी"-ति पारस्करगृह्यमेव । अतएव कौमुद्यादौ ज्ञापयेयुरिति बहुवचनेनानियतकर्तृकत्वं वेदनस्य दर्शयित्वा प्रतिगृह्यतामिति सकृद्वाक्यशेषङ्कुर्यात । इत्ये-कवचनेनात्र नियतकर्तृत्वन्दर्शितम् । इति । एवञ्च विष्टरादिनिवेदनमन्यकर्तृकमेवेति तात्प-र्यंगत्या पद्धतिकृतोवीरेश्वरादयः । तदुक्तं त्रिरन्यौरुक्त इति ॥

( २ ) विष्टरादिष्वन्यतमम् ॥

( ३ ) अत्रमन्त्रवर्णे द्वितीयपादयोर्भेदः सर्वथा । तृतीययोस्तु आसने । पादयोरिति क्रमेण भेदः पठ्यते । समानमन्यत् । अत्र पृथक्-इति करणान्निवेदनस्युँगपदवगम्यत इति चन्द्रकान्तः ।

(४) अत्र "वाच्छन्दसी"ति (पा० ६।१।१०६) वा पूर्वसवर्णदीर्घः । एवमग्रेऽपि बोध्यम् ।

सोमराज्ञ्यः(१)। सोमश्चन्द्रो राजा यासान्ताः। 'बह्वीः' बहुप्रकाराः। 'शतविचक्षणायाः' शतं विचक्षणानि मुखानि यासान्ताः शतविचक्षणाः शतमुख्यः। 'ताः' यूयम् 'मह्यम्' 'अस्मिन्नासने' "उपविष्टाये"-ति शेषः। 'शर्म्म' सुखम्(२)। यच्छत' दत्त(३)। किम्भूताः? 'अच्छिद्राः' निरन्तराः ॥ ३ ॥

हे 'ओषधीः' ओषध्यः! 'याः' यूयं 'सोमराज्ञीः' सोमराज्ञ्यः। उक्तवदर्थः। 'पृथिवीमनु' (४)पृथिव्यां 'विष्ठिताः' विशेषेण(५)स्थिताः । 'ता' यूयम् 'मह्यम्' 'अस्मिन्' द्वितीयविष्टरे। 'पादयोः' "अधस्तान्निहिते" इतिशेषः । 'अच्छिद्राः' नितन्तराः सत्यः 'शर्म्म' सुखम् 'यच्छत' दत्त ॥ ४ ॥ इति ॥ ७ ॥

तत्किं द्वितीयमपि विष्टरमासन एव देयमित्यपेक्षायामाह—

पादयोरन्यम् ॥ ८ ॥

अत्रा-"धस्तादि-"तिशेषः। अन्यम्-अपरम्। द्वितीयं विष्टरम् ॥ ८ ॥

"यतोदेवीरि"-त्यपः प्रेक्षते ॥ ९ ॥

( मं० ब्रा० २।८।५ )

प्रकृतत्वादर्हणीयः। अपः। पादप्रक्षालनार्थम्भाजनस्थमुदकम्। मन्त्रस्तु—

"यतोदेवीः प्रतिपश्याम्यापस्ततोमा राद्धिरागच्छतु ॥" ५ ॥

इति। अस्यार्थः। हे 'आपः!' वृष्ट्युपगताः । अहम् 'यतः' यस्मात्सूर्यात्प्रतिप्रसूता युष्मान् 'देवीः'(६) तद्रूपाः। 'प्रतिपश्यामि' । आलोचयामि। 'ततः' तस्मात्सूर्यात्। 'मा' मां 'प्रति' 'राद्धिः' (७)संसिद्धिः। 'आगच्छतु'। भवतु ॥ २ ॥ इति ॥ ५ ॥

(१) अत्र "अनउपधालोपिनः०" ( पा० ४।१।२८ ) इति वा ङीप्। "अल्लोपोऽनः" ( पा० ४।६।१३४ ) इत्युपधानोलोपः॥ (२) "शर्म्म-शात-सुखानि च"-त्यमरः॥

(३) "दाण् दाने" ( भ्वा० प० ) लोट्। मध्यम०बहुवचने शपि "पाघ्राध्मे०" ( पा० ७।३।७८ )-त्यादिना यच्छादेशः॥

(४) अत्र "अनुर्लक्षणे" ( पा० १।४।८४ ) इत्यनोः कर्म्मप्रवचनीयस्य योगे ( पा० २।३।८ ) द्वितीया ॥

(५) अत्र "उपसर्गात्सुनोती"-( पा० ८ ३।६५ )-त्यादिना षत्वम् ॥

(६) "पुंयोगोदाख्यत्य एवेतिन नियमस्तेन गोपस्य कन्याऽपि गोपी"ति वृत्तिकृतः प्राहुः। तेनात्र जन्यजनकभावलक्षणे पुंयोगे ङीष्। "अग्नौ दत्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिरि"तिस्मरणादादित्यप्रसूता आपोदेव्योऽभिहिताः॥

(७) "राधसाधसंसिद्धौ" ( स्वा०प० ) भावे क्तिन्। मन्त्रब्राह्मणभाष्येतु-धिः धृतिशीलोयजमानः। मारात्-विघ्नात्। आगच्छतु। विघ्नानुत्सृज्यैतु। इतिव्याख्यानन्नातिरमणीयम्। गुणविष्णुस्तु माऋद्धिरिति पठित्वा ऋद्धिःसमृद्धिर्मामागच्छत्विव्याख्यास्तेऽदयं इत्याह ॥

ततस्ताभ्योऽञ्जलिं(१) गृहीत्वाऽर्हणीयः-

**"सव्यं पादमवनेनिजे" इतिसव्यंपादं प्रक्षालयेत् ।**

( मं० ब्रा० २।८।६ )

**"दक्षिणं पादमवनेनिजे" इति दक्षिणं पादम्प्रक्षालयेत् ॥ १० ॥**

( मं० ब्रा० २।८।७ )

सव्यम्—वामम् । "वामं शरीरं सव्यं स्यादपसव्यन्तु दक्षिणमि"त्यमरः । प्रक्षालयेदिति क्रियाभ्यासः निर्देशक्रमेणैव पादप्रक्षालनार्थः । यथा चान्यत्रापि स्मर्यते—

"पादं प्रक्षालयेद्विप्रोदक्षिणं प्रथमं सदा ।
शूद्रस्तु वामं प्रथमं, सामवेदी, तथा बधूः ॥"

इति । "सामगः क्षालयेत्सव्यपामन्यश्च दक्षिणम् ॥" इति चैवमादि ।

पूर्वत्र विप्रइति क्षत्रियवैश्ययोरप्युपलक्षणम । एवमपपरत्रान्यइति ॥ "तेनोदकेने"-तिशेषः । मन्त्रौ यथा—

"सव्यं पादमवनेनिजेऽस्मिन्राष्ट्रे श्रियन्दधे" ॥ ६ ॥ इति ।
"दक्षिणं पादमवनेनिजेऽस्मिन्राष्ट्रे श्रियमावेशयामि ॥ ७ ॥

इतिच । अनयोरर्थः । अहं 'सव्यं' वामं 'पादं' चरणम् । 'अवनेनिजे' शोधयामि(२) । (प्रक्षालयामि) 'अस्मिन्' 'राष्ट्रे'(३) देशे (यत्राहंवर्त्ते) 'श्रियं' लक्ष्मीं 'दधे' स्थापयामि ॥ ६ ॥ इति ॥ 'आवेशयामि' आदधामि । ( स्थापयामि ॥ ७ ॥ इति ॥ १० ॥

ततःपुनरुदकाञ्जलिङ्गृहीत्वा—

**"पूर्वमन्य-मपरमन्य--मि"त्युभौ शेषेण ॥ ११ ॥**

( मं० ब्रा० २।८।८ )

शेषेण—अवशिष्टोदकेन । उभौ—पादौ । संहतीकृत्य(४) । पूर्वमन्यमि"-तिमन्त्रेण । प्रक्षालयेदित्यनुवर्त्तते । अर्हणीयएव । मन्त्रस्तु—

"पूर्वमन्य-मपरमन्य-मुभौ पादाववनेनिजे राष्ट्रस्यास्याद्धचाअभयस्यावरुद्ध्यै"८

इति । अस्यार्थः । अहं 'पूर्वं' प्रथमम् । 'अन्यं' सव्यम् 'अपरं' पश्चात्

---

( १ ) अञ्जल्यवच्छिन्नमुदकम् ॥

( २ ) "निजिरशौचपोषणयोः" ( जु०उ० ) लट् ।

( ३ ) "राष्ट्रं स्योदुपवर्त्तने" इतिमेदिनी । "देशविषयौ तूपवर्त्तनमि"तिचामरः ॥

( ४ ) पूर्वमन्यमित्युभौ शेषेणेति वक्तव्ये गुरुकरणेनैतत्प्रज्ञाप्यते । मन्त्रे पूर्वशब्दोऽग्रिमवचनः । अपरशब्दश्चपश्चाद्वचनः । तथाचाग्रिमप्रक्षालितमन्यं सव्यं, पश्चात्प्रक्षालितमन्यन्दक्षिणमित्युभौ,पादौ युगपदवनेनिजे।प्रक्षालयामीति मन्त्रार्थपर्यवसानात् । वीरपद्धतावप्येवमेव पठ्यते ॥

'अन्यं' दक्षिणम् एवमेतौ 'उभौ पादौ' 'अवनेनिजे' प्रक्षालयामि । 'अस्य' 'राष्ट्रस्य' देशस्य'श्रद्ध्यै' (१)वृद्ध्यर्थम् । 'अभयस्य' भयाभावस्य 'अवरुद्ध्यै' परिग्रहाय ॥ ८ ॥ इति ॥ ११ ॥

## "अन्नस्य राष्ट्रिरसी" त्यर्घ्यं प्रतिगृह्णीयात् ॥ १२ ॥

( मं० ब्रा० २।८।९ )

अर्घ्यं-यथोक्तलक्षणम् । "अन्नस्य राष्ट्रिरसी"-ति मन्त्रेण । 'प्रतिगृह्णीयात्' इति । यजमानहस्तादर्घ्यमादाय स्तोकं जलं शिरसि निदध्यादित्यर्थः । वीरपद्धतिरप्येवम् ॥ मन्त्रोयथा—

"अन्नस्य राष्ट्रिरसि राष्ट्रिस्ते भूयासम्" ॥९॥

इति । अस्यार्थः । हे अर्घ्य ! जलरूप ! त्वम् अन्नस्य व्रीह्यादेः । 'राष्ट्रिः' दीप्तिः(२) । 'असि'—भवसि । अहमपि'ते' तव ( प्रसादात् ) 'राष्ट्रिः' (३)दीप्तिमान् 'भूयासम्' भवेयम् । इत्याशंसायां लिङ् ॥ ९ ॥ इति ॥ १२ ॥

## "यशोऽसी"त्याचमनीयमाचामेत् ॥ १३ ॥

( मं० ब्रा० २।८।१० )

आचमनीयम्-आचमनार्थमुपकल्पितमुदकम् गोकर्णाकृतिदक्षिणहस्ते"नाशब्दमनवस्रा ( १-१-२ ) वमि"—ति यथोक्तेन विधिना "यसोऽसी"—ति मन्त्रेणाचामेदर्हणीयः । मन्त्रोयथा—

"यशोऽसि यशोमयि धेहि" ॥ १० ॥

इति । अस्यार्थः । हे आचमनीय ! यतस्त्वं 'यशोऽसि' कीर्त्तिरूपं भवसि । अतः 'मयि' विषये 'यशोधेहि' मां यशस्विनङ्कुर्विति ॥ १० ॥

तदेतदाचमनं सकृन्मन्त्रेण । द्विस्तूष्णीमेवेति।त्रिः । "एकक्रियायामावृत्तौ सकृन्मन्त्रान्वय" इतिवचनात् ॥ तत इन्द्रियाण्युपस्पृशेत् ।

"त्रिराचामेदपः पूर्वं-द्विः प्रमृज्यात्ततोमुखम् ।

खानि चैवस्पृशेदद्भिरि"-त्येवंमनुनाऽचमनविधानात् । खानीन्द्रियाणि । "खमिन्द्रिये खमाकाशे" इत्यभिधानात् ॥ १३ ॥

## "यशसोयशोऽसी"ति मधुपर्कम्प्रतिगृह्णीयात् ॥ १४ ॥

( मं० ब्रा० २।८।१२ )

मधुपर्क-मुक्तलक्षणम । "यशसोयशोऽसी"-ति मन्त्रेण 'प्रतिगृह्णीयात्' ।

---

( १ ) आयादेशे यलोपः । ( पा० ८।३।१९ ) "पूर्वत्रासिद्धम्" ( पा० ८।२।१ ) इति तस्यासिद्धत्वान्नदीर्घः ॥

( २ ) "राजृदीप्तौ" ( भ्वा०आ० ) त्रिन् बाहुलकात्करणे । ( पा० ३।३।१ ) जस्यषत्वम् ( पा० ८।२।३६ ) ष्टुत्वम् । ( ३ ) कर्त्तर्यत्रत्रिन् ॥

प्रतिगृह्य वामहस्ततले तत्पात्रं स्थापयेत्। अग्रे क्रियोपदेशात्। मन्त्रार्थस्तु–हेमधुपर्क्क ! यतस्त्वं 'यशोऽसि' कीर्त्तिरिव मधुरोऽसि। अतस्त्वद्योगादहमपि 'यशसः' कीर्त्तिमान्(१) "भवेयमि"ति शेषः ॥ ११ ॥ इति ॥ १४ ॥

तस्य खल्वस्य मधुपर्कस्य—

**"यशसोभक्षोऽसि महसोभक्षोऽसि श्रीर्भक्षोऽसि श्रियम्मयि धेहि" इतित्रिः पिबेत् ॥ १५ ॥**

( मं० ब्रा० २।८।१२ )

त्रिः। त्रिवारम्। क्रियाऽभ्यावृत्तिगणनेऽत्रासुच्प्रत्ययः। (पा० ५।४।१८) 'यशसोभक्षोऽसी"-ति समस्तेन मन्त्रेणार्हणीयः पिबेत्। मन्त्रो यथा—

"यशसोभक्षोऽसि, महसोभक्षोसि, श्रीर्भक्षोसि श्रियम्मयि धेहि" ॥ १२ ॥

इति। अस्यार्थः। हेमधुपर्क्क ! यतस्त्वं 'यशसः' यशसे(२)। यशोऽर्थं 'भक्षः' (३)भक्षणीयः। 'असि' भवसि। तथा 'महसः' महसे तेजोऽर्थम् 'भक्षः' 'भक्षणीयः' 'असि' भवसि। तथा 'श्रीः'(४) भक्षोऽसि' तेन त्वद्भक्षणात्कीर्त्तिस्तेजः लक्ष्मीश्च भवति। अतस्त्वं 'श्रियं' त्रितयस्यापि सम्पदं(५) 'मयि' (६)विषये 'धेहि' अर्पय। महान्देहीतियावत् ॥ १२ ॥ इति।

अत्र मन्त्रेण त्रिर्भक्षणोपदेशात्पानञ्चेदं भक्षणरूपमेव। द्रवद्द्रव्यसंयोगाच्च पिबतिशब्दप्रयोगः। मुरारिमिश्रास्तु–"अत्र मधुसंयोगाद्द्रवश्चेन्मधुपर्क्कस्स्यात्तदा पात्रेण पातव्योऽथ दध्नः काठिन्यात्पानानुपपत्तिस्तदा हस्तेन भक्षणीय इति। तेन मन्त्रे भक्षशब्दस्य सूत्रे पिबतिशब्दस्य च श्रुतिरुपपद्यते। इति-द्रष्टव्यम्"। इति। पानञ्चेदमनामिकाङ्गुष्ठाभ्याम्भक्षयेदिति वीरपद्धतिदर्शनतस्तथैवावगन्तव्यम। तत्र प्रतिप्राशनं मन्त्रपाठः "चतुर्थन्तूष्णीमि"त्यग्रिमसूत्रात्। यत्तु—हारिलपद्धतौ प्रथमङ्कनिष्ठाङ्गुष्ठयोगेन, मधुपर्कप्राशनमिति लिखितं तच्छाखान्तरविषयमित्यनुपदं स्फुटीभविष्यति। समस्तमन्त्राम्नानञ्च सूत्रात्त्रिःपानविधानम्मन्त्रे च स्थानत्रये भक्षशब्दसत्त्वात्तदन्तेनैव मधुपर्क्कप्राशनम्माभूत्किन्तु मन्त्रान्तेनेति ज्ञापनार्थम। येषान्तु "श्रियोभक्षोऽसी"ति मन्त्रपाठस्तेषां मन्त्रावयवैरेव पानं स्यात्। तथाच छन्दोगगृह्यान्तरम् "मधुपर्क्कन्त्रिष्पिबेत् यशसोमहसःश्रिय इति तूष्णीं चतुर्थम्"इति। तदत्र मन्त्रप्रतीकोपादानप्र-

---

( १ ) अर्शआदित्वान्मत्वर्थीयाऽच्प्रत्ययः। ( पा० ५।२।१२७ ) ॥

( २ ) तादर्थ्यचतुर्थ्यर्थे षष्ठी ( पा० २।३।६२ )।

( ३ ) "भक्षअदने" ( चु०प० ) कर्म्मणि।अच् (पा० ३।३।१९) अत्रभक्ष्यइत्यपपाठः।

( ४ ) ङेः सुः ( पा० ७।१।३९ ) ॥

( ५ ) "सम्पत्तिः श्रीश्च लक्ष्मीश्च"इत्यमरः। सम्पत्तिः सम्पदित्यनर्थान्तरम् ॥

( ६ ) "सममब्राह्मणे दानमि"-ति वत्सम्प्रदानेऽधिकरणत्वविवक्षाऽत्र बोध्या ॥

तीकैरेव पानमवगम्यते। "श्रीर्भक्षोऽसी"-ति खल्वस्मच्छाखायाम्मन्त्रपाठः। अतस्तत्रैव होरिलपद्धतेरुक्तिर्योजनीया। तत्र प्रमाणञ्च—

"यशसोयशोऽसीति त्रि-स्तूष्णीं बहुचतुर्थकम्।
कनिष्ठादिभिरङ्गुष्ठयोगेन तिसृभिः क्रमात्॥
मधुपर्कप्रयोगेतु प्राशने विधिरिष्यते॥"

इति परिशिष्टान्तरवचनमिति बोध्यम्॥ १५॥

तूष्णीञ्चतुर्थम्॥ १६॥

मधुपर्कस्य पिबेत्॥ १६॥

भूयएवाभिपाय शेषं ब्राह्मणाय दद्यात्॥ १७॥

भूयः। पुनरपि। एवकारकरणात्तूष्णीमेव। अभिपाय आभिमुख्येन पीत्वा शेषमवशिष्टम्। ब्राह्मणायेति। ब्राह्मणपदं पुत्रादिपरम्। "नोच्छिष्टं कस्यचिद्दद्याद न्यत्र जायापुत्रशिष्येभ्यः" इति स्मरणात्। "उच्छिष्टमगुरोरभोज्यमि"-ति वसिष्ठवचनाच्च। तदभावे पुनरब्राह्मणायापि दद्यात्। तच्चाद्भिः प्रोद्येतिविशेष। तथा च द्राह्यायणसूत्रम् "तदभावेऽद्भिः संप्रोद्या-(१)ब्राह्मणाये"-(१।२।२१) ति। लाट्यायनोऽप्येवमेव। (१।३।११) सर्वाभावे "प्राग्वाऽसञ्चरे निनये दि"-ति पारस्करीयैव गतिरन्यशाखीयाऽप्यविरोधिनीति। वीरपद्धतिरप्येवमेव। "मधुपर्कशेषमसञ्च(२)रदेशे धारयेदि"ति॥ १६॥

आचान्तोदकाय गौरितिनापितस्त्रिर्ब्रूयात्॥ १८॥

अत्र सप्तम्यर्थे चतुर्थी। अर्हणीये कृताचमने सति। यद्वा तादर्थ्ये चतुर्थी। यथा स शृणोति तथेति (तदर्थम्) अनेनोच्चैस्त्वं वचनस्य व्यनक्ति। क्रियाग्रहणाद्वा चतुर्थी (पा० १।४।३२ वा०) मधुपर्कभक्षणेनोच्छिष्टतापहत्या आचमनं विधीयते नचानेन (भोजनेन) भुक्त्वा कर्म्माचरणदोष इत्युक्तमधस्तात् (२।३।१७)॥ १८॥

नापितेन त्रिर्गौरित्युक्ते खल्वयमर्हणीयस्तमेव नापितमुद्दिश्य—

"मुञ्च गां वरुणपाशाद्द्विषन्तं मेऽभिधेही"ति।

तञ्जह्यमुष्यचोभयोरुत्सृज गामत्तु तृणानि पिबतूदकामि"-तिब्रूयात् १९

(मं ब्रा २।८।१३)

"मुञ्चगामि"ति मन्त्रं ब्रूयात्। मन्त्रार्थस्तु-अर्हणीयोनापितं वदति-एतां

---

(१) अत्र शूद्रवर्जमिति तद्भाष्यात्क्षत्रियवैश्ययोरन्यतरायेति प्रतीयते। युक्तञ्चैतत्। 'नञिवयुक्तमन्यसदृशाधिकरणे, तथाह्यर्थगतिः' इतिपाणिनीयपरिभाषणात्। महाभाष्येऽपि "नञ्ब्राह्मणमानयेत्युक्ते लोष्टमानीय कृती भवती"-त्युक्तन्तेन तद्भिन्नस्य तत्सदृशस्यैव ग्रहणम्भवतीति॥ (२) जनसञ्चारवर्जिते॥

'गां' 'वरुणपाशात्' विशिष्टबन्धनात् 'मुञ्च' मोचय। ततश्च 'उत्सृज' विसर्जय। सेयं विसृष्टा सती 'तृणानि' घासान् 'अत्तु' भक्षयतु। 'उदकं च 'पिबतु' एवं नापितमुक्ताऽर्हणीयामाह—हे अर्हणीये ! (१) (पूजनीये!) एवम्मोचिता त्वम् 'मे' ममार्चनीयस्य। 'अमुष्य' अर्हयितुः 'च' 'उभयोः' 'द्विषन्तं' द्वेष्टारं तं तवाऽऽनेतारम् 'अभिधेहि' बधान । (२) 'जहि' विनाशय च ॥ १३ ॥ इति।

अत्रामुष्येतिपदस्थाने प्रकृतत्वादर्हयितुर्यजमानस्य नाम गृह्णीयात्। अतः पदस्थाने नामादेशस्याचार्यसम्मतेः कर्मप्रदीपे कात्यायनेनोक्तत्वात्। तथाच छन्दोगगृह्यान्तरमपि-"सञ्चोदितामनुमन्त्रयते मुञ्च गामित्यमुष्य चेत्यर्हयितुर्नाम ब्रूयादि"-तिचन्द्रकान्तः । समस्तमन्त्राम्नानञ्च तञ्जह्यमुष्येतिपदयोर्म्मध्ये मम देवदत्तस्यचैवमध्याहारशङ्कानिवृत्त्यर्थम् ॥ मन्त्रमध्ये इतिकारकरणं पूर्वपदानां यथावस्थितानामेव पाठार्थम् । इतिमुरारिमिश्राः । अतएव(३)तमिति पदे नोहः। तस्येतिकारात्प्राक्तनेन द्विषन्तमित्यनेन सम्बन्धादिति च चन्द्रकान्तः॥१९

"माता रुद्राणामि"-त्यनुमन्त्रयेत् ॥ २० ॥

( मं ब्रा० २।८।१४ )

गामित्यनुवर्त्तते। अनुमन्त्रणमिहालोचनम्। तथचगृह्यासङ्ग्रहः—

"स्पृशन्ननामिकाग्रेण क्वचिदालोकयन्नपि।
आमन्त्रणीये सर्वत्र सदैवमनुमन्त्रयेत् ॥"

इति। मन्त्रोयथा

"माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्यानाममृतस्य नाभिः।
प्र णु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट"॥१४॥इति।

अस्यार्थः—येयमर्हणार्थ-( मालम्भननिमित्त- ) ङ्गौरानीता सा 'रुद्राणां' 'माता' मातृवन्मान्या 'वसूनां' देवविशेषाणां 'दुहिता' दुहितृवत्पाल्या 'आदित्यानां 'स्वसा' स्वसृवदनुकम्प्या 'अमृतस्य' दुग्धदध्यादेः 'नाभिः' उत्पत्तिस्थानम्। अतएताम् 'गाम्' 'अनागाम्' (४) सर्वथाऽनपराधिनीम्। अतएव 'अदितिम्'

( १ ) अत्रार्हणसाधनभूते इत्यर्थः। "अर्हणापुत्रवासस" इति पूर्वापन्यस्त श्रुतौ तथैवार्थावगतेः। यद्यपि कृत्यप्रत्ययोभावकर्म्मणोरेव विहितस्तथापि "कृत्यल्युटोबहुलम्" ( पा० ३।३।११३ ) इति बहुलग्रहणादस्त्नानीयञ्चूर्णमिति वदिहकरणेऽनीयर् ॥

( २ ) अत्राभिपूर्वोदधातिर्बन्धने गुणविष्ण्वादिभिर्व्याख्यातः॥

( ३ ) वस्तुतस्तु ( सूत्रे ) इतिकारो यथास्थितस्वरूपपरामर्शार्थको मध्यमणिन्या येनोभयोरपि सम्बध्नन्नविकृतस्वरूपं परामृशति। वीरपत्नत्यादिष्वेवमेव पाठात। गृह्यान्तरवचनन्तु शाखान्तरविषयम् । भवदेवभट्ट-भट्टनारायणाद्यस्तु-अत्रपठ्यमानमन्त्रकाण्डे "इति" पदं न पठ्यते। केवलमाचार्येणैवोक्तमर्थम्प्रतिपिपादयिषुणा प्रक्षिप्तन्तदित्याहुः॥

( ४ ) "ये सान्तास्तेऽदन्ताः" इतिन्यायेन "आगोऽपराधे" इत्यभिधाने सान्तोऽदन्तश्च वक्ष्यते। तेनात्र बहुव्रीहिः॥

अनवखण्डनीयां देवमातरं वा (१) । हेयजमानपरिचारकाः ! यूयम् 'मा वधिष्ट' मा घ्नत । अहमेव 'नु' भोः (२)'चिकितुषे' ज्ञानसम्पन्नाय (३)'जनाय' अस्मै (४)यजमानाय 'प्रवाचम्' प्रोक्तवानस्मि(५) अनागां गां मा वधिष्टेति ॥ १४ ॥ इति ॥ २० ॥

अत्र ( नापितोक्त्यनन्तरं तत्प्रतिवचनादिस्थाने ) विशेषमाह—

**अन्यत्र यज्ञात् ॥ २१ ॥**

यज्ञोज्योतिष्टोमादिः । ततोऽन्यत्रैवङ्कुर्यात(६) ॥ २१ ॥

यज्ञेहि किङ्कुर्यादित्युच्यते—

**कुरुतेत्यधियज्ञम् ॥ २२ ॥**

अधियज्ञम् । (७) यज्ञे पुनर्नापितेन गौरित्युच्चैस्त्रिरुक्ते खल्वयमर्हणीयः । कुरुत । आलम्भध्वमित्यग्निस्वामिप्रभृतयः । तथाचलाट्यायनश्रौतसूत्रम "कुरुतेति गवि प्रोक्तायां ब्रूयादि ( १।२।१२ ) ति । अस्यालम्भनादि श्रपणान्तं कर्म कुरुतेति व्याख्यानन्द्राह्यायणीये श्रौतसूत्रभाष्ये धन्वीप्राह । तदेतत्कलिवर्ज्यप्रकरणे पाराशरीये स्मर्यते—

"यज्ञाधानङ्गवालम्भं सन्यासं पलपैतृकम् ।
देवराच्च सुतोत्पत्तिङ्कलौ पञ्च विवर्जयेत् ॥"

इति । यज्ञाधानम्--अग्निहोत्रम् । अत्र "अश्वालम्भमि"-तिः केचित्पठन्ति । पलपैतृकं (८) मांसेन पितृश्राद्धम् । विवाहादिगृह्यकर्म्मणि मधुपर्के तु

---

( १ ) "दो अवखण्डने" ( दि० प० ) इत्यस्मात्कर्म्मणि क्तिनि । "द्यतिस्यतिमास्थामि-ति किती" ( पा० ३।३।१७४ ) ति धातोरित्वे दिति-शब्दोनभसमसितः । निरुक्तेषु तु "अदितिरदीना देवमाते"ति ( ४।२२ ) पठ्यते । तत्र कर्त्तरि संज्ञा याक्तिज् ( पा० ७।४।४० ) बोध्यः ।

( २ ) नुशब्दः "नुपृच्छायां विकल्पे चे"त्यमरेण प्रश्ने प्रयुक्त इहसम्बुध्यर्थे प्रयुक्तोयोग्यतावशात । तथा च निरुक्तम् "नुइत्येषोऽनेककर्म्मा" ( १-२-२ ) अनेककर्म्माऽनेदार्थं इति दुर्गः ॥

( ३ ) "कितज्ञाने" ( भ्वा० प० ) तस्मात्क्वसौ चतुर्थ्येकवचनम् ॥

( ४ ) "जनोलोके, महर्लोकात्परलोके च पामरे" इति विश्वः ॥

( ५ ) अत्र "बहुलं छन्दस्यमाङ्योगेऽपी"ति ( पा० ६।४।७५ ) अडागमप्रतिषेधः । व्यत्येयेन ( पा० ३।१।८५ ) नस्यणः ।

( ६ ) गवानुमन्त्रणादि ॥

( ७ ) यज्ञे इतीत्यर्थेऽव्ययीभावः समासः ( पा० २।१।६ ) अन्येतु यज्ञमधिकृत्येत्यधियज्ञम् । यदर्हणङ्क्रियते तत्रेति व्याचक्षते ॥

( ८ ) "पलमुन्मानमांसयोरि"ति रुद्राभिधानात्पलेन मांसेन केवलेन पैतृकं श्राद्धम्पलपैकमुच्यते ॥ "सहान्नेनोत्तरास्तर्पयन्ती"ति मत्स्यादीन्युपक्रम्य श्राद्धकल्पे सर्वैरेव सूत्रणात ॥

आचार्येणाऽपि यथोक्तं गोर्मोक्षणमनुमन्त्रणञ्चेति द्वयमप्यभिहितम्॥ २२ ॥

**षडर्घ्या भवन्ति ॥ २३ ॥**

अर्घम्पूजाविधिमर्हन्तीत्यर्घ्याः। "मूल्ये पूजाविधावर्घः" इत्यमरः। "दण्डादिभ्योयत्" ( पा० ५।१।६६ ) इति यत्प्रत्ययः। ते खल्विमे षड्भवन्ति ॥२३॥

ते खल्विमे षडर्हणीया नामतोनिर्दिश्यन्ते—

**आचार्य ऋत्विक्-स्नातको-राजा-विवाह्यः प्रियोऽतिथिरिति॥२४॥**

तत्राचार्योमनुनोक्तः—

"उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते॥"

इति। योब्राह्मणः शिष्यमुपनीय कल्परहस्यसहितां वेदशाखां सर्वामध्यापयति तमाचार्यम्पूर्वे मुनयोवदन्ति। कल्पो-यज्ञविद्या। श्रौतगृह्य-भेदभिन्नो, रहस्यमुपनिषत्। वेदत्वेऽप्युपनिषदां प्राधान्यविवक्षया पृथगुनिर्देशोगोबली(१)-वर्द्दन्यायेन बोध्यः। ऋत्विगपि तेनैवाभिहितः—

"आग्न्याधेयं पाकजज्ञमग्निष्टोमादिकान्मखान्।
यः करोति वृतोयस्य स तस्यर्त्विगिहोच्यते॥" इति।

आहवनीयाद्यग्न्युत्पादनमग्न्याधेयम्। अष्टकादीन्पाकयज्ञान्। अग्निष्टोमादीन् यज्ञान्। कृतवरणोयोयस्य करोति स तस्य ऋत्विगिह शास्त्रेऽभिधीयते। वेदमधीत्य यः स्नाति स स्नातः। स्नात एव स्नातकः। ते च स्नातकादयो व्याख्याताः पारस्करेण-"समाप्य वेदमसमाप्य व्रतंयः स्नाति स विद्यास्नातकः। समाप्य व्रतमसमाप्य वेदं यः स्नाति स व्रतस्नातकः। उभयं समाप्य यः स्नाति स विद्याव्रतस्नातकः"। इति। राजाअभिषेकादिगुणगणयुक्तोजनेश्वरः। विवाह्यो-विवाहयितव्योवरः। प्रियः। विद्यातपः प्रभृतिभिर्गुणैः प्रीतिविषयः। अतिथिः ( १।४।१ सू० ) यथोक्तलक्षणः॥

मनुः—

"एकरात्रं हि निवसन्नतिथिर्ब्राह्मणः स्मृतः।
अनित्यं हि स्थितोयस्मात्तस्मादतिथिरुच्यते॥"

इति। प्रियश्चायं वृत्तस्वाध्यायगुणयोगाद्भवतीत्याह—

"विद्यातपः समृद्धेषु हुतं विप्रमुखाग्निषु।
निस्तारयति दुर्गाच्च महतश्चैव किल्विषात्॥"

---

(१) गामानय-बलीवर्द्दञ्चानयेत्युक्ते बलीवर्द्दोऽपि गौरवेति पृथक् तस्याभिधानं प्राधान्यख्यापनाय। एष एव ब्राह्मणवशिष्ठन्यायार्थः॥

इति। प्रियइति विशेषणाद्विद्यादिगुणवानेवातितिरर्घ्येणार्हणीयोनपुनर्यः कश्चिदिति दर्शयति॥ २४॥

किमेतानाचार्यादीन्सकृदेवार्हयेत? नेत्याह—

**परिसंव्वँत्सरानर्हयेयुः॥ २२॥**

परिसंव्वँत्सरान्-परिगतः संव्वँत्सरोयेषांस्तानिमानाचार्यादीन् अर्हयेयुः। पुनरिति परतस्तनं काकाक्षिगोलकन्यायेनोभयत्रापि सम्बध्यते। तेन वत्सरात्पूर्व्वमेतानागतान्पुनः पुनरर्हयेयुरित्यर्थः॥ २५॥

**पुनर्यज्ञविवाहयोश्चपुनर्यज्ञविवाहयोश्च॥ २६॥**

इति श्रीमद्गोभिलीयगृह्यसूत्रे चतुर्थप्रपाठकस्यदशमी कण्डिका॥४॥१०॥*

( प्रपाठकश्चायं समाप्तः )

यज्ञविवाहौ-व्यख्यातौ। तयोर्निमित्तभूतयोः संव्वँत्सरमध्येऽप्यागतानाचार्यादीन्पुनरर्हयेयुरित्यर्थः। चकारः परिसंव्वँत्सरकालं समुच्चिनोति॥ अन्तेऽभ्यासः प्रपाठकपरिसमाप्तिद्योतनार्थो, मङ्गलार्थइतिमुरारिमिश्राः प्राहुः॥ २६॥

इति श्रीमद्गोभिलीयगृह्यसूत्रव्याख्यायाम्मृदुलाख्यायाम्मुकुन्दशर्म्मसङ्कलितायां चतुर्थप्रपाठकस्य दशमी कण्डिका प्रपाठकश्च समाप्तः॥ ४॥ १०॥ *॥

( अथ संस्कार कुशण्डिका परिशिष्टम्— )

## चतुर्थप्रपाठके पञ्चमी कण्डिका--

**काम्येष्वतऊर्ध्वम्॥ १॥**

अत ऊर्ध्वङ्काम्येषु "विधिमुपदेक्ष्याम" इति सूत्रशेषः॥ १॥

**पूर्वेषु चैके॥ २॥**

पूर्वेषु-नित्य-नैमित्तिकेष्वपि वक्ष्यमाणोविधिर्भवति। इति चैके आचार्यामन्यन्ते॥ २॥

कोऽसौ विधिरित्युच्यते—

**पश्चादग्नेर्भूमौ न्यञ्चौ पाणी प्रतिष्ठाप्ये—"दम्भूमेर्भजामह"इति॥३॥**

( मं० ब्रा० २।४।१ )

न्यञ्चावधोमुखौ। तथाचच्छन्दोगपरिशिष्टम्—

"दक्षिणं वामतोबाह्यमात्माभिमुखमेव च।
करङ्करस्य कुर्वीत करणेन्यञ्चकर्म्मणः॥

कृत्वाऽग्न्यभिमुखौ(१)पाणी स्वस्थानस्थौ सु (२) संयतौ ॥"

इति । वामत इति षष्ठीसमर्थात्तसिः । ( पा० ५।४।४४ वा० ) तेन वामस्य करस्य बाह्यमुपरिस्थम् । आत्माभिमुख-मग्न्यभिमुखं दक्षिणङ्करङ्कुर्वीतेति सम्बन्धः । एवञ्चोपरिकृतदक्षिणहस्तः करद्वयमधोमुखमग्न्यभिमुखञ्च भूमावारोप्य भूमिजपङ्कुर्यादिति पर्यवसितोऽर्थः ॥ मन्त्रमाह-इदमिति । यथा—

"इदम्भूमेर्भजामह इदम्भद्रं सुमङ्गलम् ।
परा सपत्नान्बाधस्वान्येषां विन्दते धनम् ॥"

इति । अस्यार्थः । हे अग्ने ! यदेतद् 'भूमेः' सम्बन्धि स्थण्डिलम् । (भवताधिष्ठितम् ) 'इदं' वयं 'भजामहे' सेवामहे । "भजसेवायाम्" (भ्वा० आ०) लट् । गृह्णीम इति यावत् । किम्भूतम् ? 'भद्रं' कल्याणकरम्(३) भजनीयं वा । 'सुमङ्गलम्' प्रशस्ततरम् । इदमिति पुनर्वचनमादरार्थम् । किञ्च हे अग्ने ! 'सपत्नान्' शत्रूनस्माकम् 'पराबाधस्व' सुष्ठु (४)पीडय । किञ्च (५)योऽप्यनेन मन्त्रेण विवाहादियज्ञकर्मणि भवदधिष्ठितम्भूमेरवयवं गृह्णाति सोऽपि 'अन्येषाम्' ईश्वराणां ( धनिनाम् ) सम्बन्धि । 'धनं' विन्दते' प्राप्नोति ॥१॥

इति ॥ ३ ॥

## वस्वन्तꣳरात्रौ, धनमिति दिवा ॥ ४ ॥

रात्रौ क्रियमाणे कर्म्मणि । वसुशब्दान्तोमन्त्रः पठनीयः । दिवा-दिवसे धन शब्दान्त इत्यर्थः ॥ ४ ॥

## "इमꣳस्तोममि"ति तृचेन परिसमूहेत् ॥ ५ ॥

( मं० ब्रा० २।४।२-४ )

'इमं स्तोमम्" इति-एवमादिना । तृचेन । तिसृणामृचां समाहारस्तृचम् "ऋचित्रेरुत्तरपदादिलोपश्चच्छन्दसि" ( पा० ६।१।३४ वा० ) इति सम्प्रसारणादौ कृते रूपम् । "छन्दोवत्सूत्राणि भवन्ती"ति महाभाष्यम् । तेन "इमं" "भराम" "शकेम"-ति ऋक्त्रयेणेत्यर्थः ॥

ऋचोयथा—

"इमं स्तोममर्हते जातवेदसे रथमिव सम्माहेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मारिषारिषामा वयन्तव ॥ २ ॥

( १ ) 'हस्तौ' इति मुद्रितपुस्तकपाठः । ( २ ) "सुसंहतौ" इति मु० पु० पाठः ।

( ३ ) "स्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभमि"त्यमरः ॥

( ४ ) "बाधृविलोडने" ( भ्वा० आ० ) विलोडनं प्रतीघातः । प्रार्थनायां लोट् । "व्यवहिताश्च" ( पा० १।४।८२ ) इत्युपसर्गस्य व्यवहित प्रयोगः ॥

( ५ ) एषोऽर्थस्तात्पर्यगत्या गुणविष्णवादिभिर्व्याख्यात इहोद्धृतः ॥

भरामेध्मं कृणवामा हवींषिते चितयन्तः पर्वणा पर्वणा वयम् ॥
जावातवे प्रतरां साधया धियोऽग्ने सख्ये मारिषामा वयन्तव ॥ ३ ॥
शकेम त्वा समिधं साधया धियस्ते देवा हविरदन्त्याहुतम् ॥
त्वमादित्याँ२॥ आवहताँ२॥ ह्युश्मस्यग्ने सख्येमारिषामा वयन्तव ॥४॥

इति। आसामर्थाः। वयम् 'इमं' (१)स्तुतिविशेषं 'सम्महेमा' सम्महेम। सम्यक् पूजोपकरणयुक्तं कुर्याम। छान्दसोदीर्घः (पा० ६।३।१०७) एवमग्रेऽपि। 'हि' यतः। 'नः' अस्माकम्। 'अस्य' अग्नेः सकाशात्। 'भद्रा' कल्याणी 'प्रमतिः' प्रकृष्टा बुद्धिः। 'संसदि' सभायां(२) (जनसमाजे) "जायते" इति शेषः। जया वयमपि स्तोतुं प्रभवाम इति भावः। तस्मात् हे 'अग्ने'! 'तव' 'सख्ये' मित्रत्वे स्थिता 'वयम्' केनचिदपि दुरात्मना 'मा रिषाम' माहिंसि(३)ष्महि (हिंसितामा भावेम) २॥ हे 'अग्ने 'ते' त्वदर्थम्। 'वयम्' इध्मं' यज्ञियदारुसमिधं 'आभराम' आहराम(४)। तथा 'पर्वणा(५)पर्वणा' प्रतिपर्व (पर्वणि पर्वणि) 'हवींषि' हवनीयानि चरुप्रभृतीनि। 'चितयन्तः' सञ्चितानि कुर्वन्तः। 'कृणवाम' कृणवाम। सम्पादयाम (निर्वपामेति यावत्) किमर्थम्? 'प्रतराम्' (६)प्रकृष्ट-(दीर्घ-) तरकालम् 'जीवातवे' जीवनाय(७)। किञ्च हे 'अग्ने' 'धियः' कर्माणि (निघं० २।१।२१) अस्माभिः क्रियमाणानि। 'साधया' साधय। सफलानि कुरु। 'तव' 'सख्ये' मित्रत्वेस्थिता 'वयं' केनचिद्दुरात्मना 'मा रिषाम' माहिंसिष्महि (हिंसितामा भवेम)॥ ३॥

हे अग्ने! त्वमस्माकं धियः बुद्धीः कर्म्माणि (निघं० २।१।२१) वा। 'साधया' साधय। त्वदाराधनयोग्या (-नि) निष्पादय। पूर्ववद्दीर्घश्छान्दसः। यथा 'वयं' 'समिधं' समिन्धयितुं(८) 'शकेम' शक्नुयाम(९)। 'देवाः' इन्द्रादयः। 'ते' त्वयि। (१०)'आहुतं' प्रहुतं 'हविः' हवनीयं चरुपुराडाशादिकम्।

---

(१) सोमसाध्येषु यागेषु छन्दोगैः क्रियमाणा पृष्ठयादिसंज्ञिका स्तुतिस्तोमः।

(२) "सभासमितिसंसदः" इत्यमरः॥

(३) "रिषहिंसायाम्" (भ्वा० दि० प० ) कर्म्मणि लुङ्॥

(४) "हृग्रहोर्भश्छन्दसि" (पा० ३।१।८४ वा०) इति हस्यभः। हरतिरत्रसोपसृष्टार्थेवर्तते॥

(५) प्रतिदर्शपौर्णमासादि॥

(६) अत्रो-"प्रसङ्गबलेन योग्यक्रियाध्याहार" इति। "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" (पा०५।४।११) इति आमन्तात्। "तरप्तमपौघः" (पा०१।१।२२) इति घसंज्ञा॥

(७) "जीवेरातुः" (उ० १।७९) इति भावे आतुः प्रत्ययः॥

(८) "शकिणमुलकमुलौ" (पा० ३।४।१२) इति तुमर्थे कमुल्प्रत्ययः॥

(९) "लिङ्याशिष्यङ्" (पा० ३।१।८६) इत्यङ्॥

(१०) व्यत्ययेन (पा० ३।१।८५) सप्तम्यर्थे षष्ठी॥

'अदन्ति' भक्षयन्ति । त्वन्मुखत्वात्तेषाम्(१) । अतस्त्वं 'तान्' 'आदित्यान्' अदितिपुत्रान्(२) देवान् । 'आवह' आवाहय । अन्तर्भावितण्यर्थोऽत्रावहतिः । 'हि' यस्मात् । 'वयं' 'तान्' 'उश्मसि' (३)उश्मि । कामयामः । हे 'अग्ने' 'तव' 'सख्ये' मित्रत्वे स्थिता वयं केनचिदपि 'मा रिषाम' हिंसिता मा(४)भ्रेम ॥ ४ ॥ इति ॥

परिसमूहेत् । विक्षिप्तानग्न्यवयवानेकीकुर्यात् । अन्यत्र क्षिप्रहोमेभ्यः । तथोक्तम्–( छ० प० ) "न कुर्यात्क्षिप्रहोमेषु द्विजः परिसमूहनम् ॥" इति । परिसमूहनञ्चेदं दक्षिणहस्तेन । "यत्रकर्त्तुरङ्गं नचोच्यते । दक्षिणस्तत्रविज्ञेय" इतिकातीयपरिभाषणात् । कुशत्रयेण चेतिवीरेश्वरादयः । तत्प्रकारमाह–कर्म्मप्रदीपः—

"प्रदक्षिणन्तथासीनः कुर्यात्परिसमूहनम् ।"

इति । एवञ्चोत्तरपूर्वदक्षिणक्रमेणैकैकयर्चा दक्षिणहस्तेन कुशत्रयङ्गृहीत्वा परिसमूहनङ्कर्त्तव्यमिति द्रष्टव्यम् ॥ ५ ॥

**वैरूपाक्षः पुरस्ताद्धोमानाम् ॥ ६ ॥**

( म० ब्रा० २।४।५ )

वैरूपाक्षः । विरूपाक्षशब्दोयस्मिन्वर्त्तते स विरूपाक्षः । अर्शादित्वान्मत्वर्थीयोऽच्प्रत्ययः ( पा० ५।२।१२७ ) । ततस्स्वार्थेऽण् ( पा० ५।४।३८ ) प्रत्ययः । होमानाम्–होमयुक्तमन्त्राणाम् । अयमप्यर्शादिरेवावगन्तव्यः । पुरस्तात्–पूर्वम् । "भवतो–"तिशेषः । अत्राप्यन्यत्रक्षिप्रहोमेभ्य इति द्रष्टव्यम् । मन्त्रो यथा—

"भूर्भुवःस्वरों महान्तमात्मानं प्रपद्ये विरूपाक्षोऽसि दन्ताञ्जिस्तस्यते शय्या पर्णेगृहान्तरिक्षे विमितꣳहिरण्मयं तद्देवानाꣳहृदयान्ययस्मये कुम्भेऽअन्तः सन्निहितानि तानि बलभृच्च बलसाच्च रक्षतोऽप्रमनी अनिमिषत्तत्सत्यं यत्ते द्वादश पुत्रास्ते त्वा सव्वँत्सरे सव्वँत्सरे कामप्रेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्यमुप-

---

( १ ) तथाचश्रुतिः "अग्निमुखा वैदेवा" इति ॥

( २ ) अपत्यार्थे णप्रत्ययः ( पा० ४।१।८५ ) "यस्येति च"ती ( पा० ६।४।१४८ ) कारलोपः ॥

( ३ ) "वशकान्तौ" ( अ०प० ) लटोमसि "ग्रहिज्ये०" ( पा० ६।१।१६ ) त्यादिना सम्प्रसारणे "इदन्तो मसि" ( पा० ७।१।४६ ) इतिमसइगागमः ॥

( ४ ) अत्रादित्यां ताँ इति "दीर्घादटिसमानपादे" ( पा० ८।३।९ ) इतिनस्यरुत्वे यत्वयलोपौ । "आतोऽटिनित्यम्" ( पा० ८।३।३ ) इत्यनुनासिकः ।

( ५ ) अत्र (४–५) एतदभिधानेनातः प्राक्तनानामग्न्याधानादिकर्म्मणां यथोक्तानां नित्यनैमित्तिकत्वे यथायथं विज्ञायेते । किन्त्वेतत्पारिशिष्टभूतमिति उपक्रमोक्ता नित्यकाम्यव्यवस्था नानुपपद्यते ॥

यन्ति। त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणोवै ब्राह्मणमुपधावत्युपत्वा धावामि। जपन्तं मा मा प्रतिजापीर्जुह्वन्तं मा मा प्रतिहौषीः कुर्वन्तं मा मा प्रतिकार्षीस्त्वां प्रपद्ये त्वया प्रसूत इदङ्कर्म्मकरिष्यामि तन्मे राध्यतान्तन्मे समृद्ध्यतान्तन्म उपपद्यतां समुद्रोमा विश्वव्यचा ब्रह्माऽनुजानातु तुथोमा विश्ववेदा ब्रह्मणः पुत्रोऽनुजानातु श्वात्रोमा प्रचेता मैत्रावरुणोऽनुजानातु। तस्मै विरूपाक्षाय दन्ताञ्जये समुद्राय विश्वव्यचसे तुथाय विश्ववेदसे श्वात्राय प्रचेतसे सहस्राक्षाय ब्रह्मणः पुत्राय नमः ॥ ५ ॥" इति ॥

अस्यार्थः। 'भूः' पृथिवी 'भुवः' अन्तरिक्षम् 'स्वः' द्यौः 'ॐ' ॐकार आत्मा। एतेयदात्मानः। ततोऽपि 'महान्तं' रुद्राग्निरूपम् 'आत्मानम्' 'प्रपद्ये' प्रपन्नोभवामि। हे भगवंस्त्वं 'विरूपाक्षोऽसि' विविध(नाना)रूपनेत्रोभवति। तथाचश्रुतिः "सर्वतः पाणिपादान्तः सर्वतोऽक्षिशिरोमुखः। विश्वरूपोमहानग्निःप्रणीतः सर्वकर्म्मसु" इति। किञ्च 'दन्ताञ्जिः' दन्तानानक्ति व्यञ्जय(१)तीति। 'तस्य' एवम्भूतस्य 'ते' तव 'शय्या' शयनस्थानम्। 'पर्णे' पर्णतुल्ये उपलेपनाभ्युक्षणादिभिः संस्कृते स्थण्डिले "भूमौ स्थानमग्नेः" इतिश्रुतेः। 'गृह' गृहञ्च। सोर्लुक् ( पा० ७।१।३९ ) 'अन्तरिक्षे' भुवर्लोके। 'विमितं' निर्म्मितं, हिरण्यगर्भप्रभृतिभिः। कीदृशं! हिरण्मयम्' हिरण्यम(२)यम्। 'तत्' तस्मिन्। ङेर्लुक् ( पा० ७।१।३९ ) गृहे 'देवानाम्' इन्द्रादीनां 'हृदयानि' "तिष्ठन्तीति"(३)शेषः। कस्मिन्निव ? 'अयस्मये' लौहमये(४) 'कुम्भे' "इवे–"तिशेषः। 'अन्तःमध्ये' 'सन्निहितानि' एकीभूतानि 'तानि' देवताहृदयानि। 'बलभृच्च' बलमुपचयात्मकं विभर्त्तीतिक्विप्। 'बलसाच्च' बलंविपक्षाणां सादयतिस्फोटयतीतिक्विप्। एतन्नामकौ अग्नेः प्रतीहारौ तौ 'अप्रमनी'(५) अप्रमादिनौ। 'अनिमिषत्' अनिमिषन्तौ(६) सन्तौ यदेतौ 'रक्षतः' त्वाम् (अग्निम्) 'तत्सत्यं' ताभ्यांहि रक्षितेअछनौयजमानः पमुपुरोडासादि जुहोति। 'यत्' 'ते' तव 'द्वाद-

(१) "अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु" ( रु० प० ) अत औणादिक इन् ( उ० ४।१।१६ )

(२) सुवर्णमयम्। "दाण्डिनायने०" ( पा०६।४।१७४ ) त्यादिना विपातः। तथाच श्रुतिः "ज्वलितमग्निंप्रविशन्तमन्तरिक्षम्" इति ॥

(३) तैर्हृदयैक्यस्थितोऽग्निः प्रार्थ्यते कदापुनस्त्वमस्माकमग्ने हविरानविष्यसीति॥

(४) "अयस्मयादीनि च्छन्दसि" ( पा० १।४।२० ) इतिनिपातितः ॥

(५) "ये सान्तास्तेअदन्ता" इतिन्यायेन। प्रगतमनः शब्दादकारान्तान्मत्वर्थ ई-( पा० ५।२।१२२ ) प्रत्यये भत्वादल्लोपः। (पा० ६।४।१४८) प्रमनी प्रमादी ॥ ततो नञ्समासः। "वाच्छन्दसा–" ( पा० ६।१।१०६ ) ति वा पूर्वसवर्णदीर्घः ॥

(६) अमीलिताक्षौ। औङोलुक् ( पा० ७।१।३९ ) ॥

शपुत्राः । अग्न्याख्याएव । 'ते' 'सव्वँत्सरे' २प्रत्यब्दम् । 'कामप्रेण' (१)अभिलाषपूरकेण 'यज्ञेन' ज्योतिष्टोमादिना । यजमानं 'याजयित्वा' यागेन सम्पाद्य 'पुनः' 'ब्रह्मचर्यम्' ब्रह्मभूतं 'त्वाम्' 'उपयन्ति' । प्रविशन्ति । हे अग्ने ! 'त्वं' 'देवेषु' देवलोकेषु 'ब्राह्मणोऽसि' 'अहं' 'मनुष्येषु' मनुष्यलोकेषु 'ब्राह्मणः' 'वै' निश्चयेन । लोकः 'ब्राह्मणम्' एव 'उपधावति' आश्रयत्वेन ढौकते । ( सेवते ) अतः 'त्वा' त्वाम् 'उपधावामि' परिचरामि(२) । उपधावनकारणमाह— "जपन्तं(३)×××कार्षीः" इति । एदुक्तंभवति–जपहोमकर्म्मकाले ममप्रातिकूल्यम्भागाइति । अतः 'त्वां' 'प्रपद्ये' प्रपन्नोऽस्मि(४) । 'त्वया' 'प्रसूतः' अभ्यनुज्ञातः । 'इदं' प्रस्तुतं 'कर्म्म' करिष्यामि । यतएवमतः 'तत्' एतत्कर्म्म 'मे' मम 'राध्यताम्' (५)संसिध्यतु । 'तन्मे' 'समृद्ध्यताम्' (६) संवर्द्धताम् । 'तन्मे' 'उपपद्यताम्' फलप्रदानसमर्थं जायताम् । अत्र "तन्मे" इत्यादरातिशये भूयस्त्वम् । अथ यत्ते द्वादशपुत्रा इत्युक्तन्तान्नामतः कतिचन प्रयोगतोनिर्दिशति–'समुद्रः' समुद्रइव 'विश्वव्यचाः' विश्वंव्यचति विविधं गच्छ(७)तीति विश्वव्यचाः । 'ब्रह्मै' तन्नामा अग्निश्च 'मा' माम् । अत्रकर्म्मणि प्रवृत्तम् 'अनुजानातु' अनुज्ञापयतु । तथा 'तुर्थः' तन्नामा 'विश्ववेदाः' सर्वस्यकर्म्मजातस्यवेदिता । 'ब्रह्मणः' उक्तरूपस्य 'पुत्रः' 'मा' माम् 'अनुजानातु' । तथा 'श्वात्रः' तन्नामा 'प्रचेताः' प्रकृष्टमनाअग्निः एवं 'मैत्रावरुणः' मित्रवरुणदेव(८)त्यश्च 'मानुजानातु' पूर्ववदर्थः । हे अग्ने ! यतस्त्वमेवमनेकभेदः । तस्मै तुभ्यं "विरू×××त्रायनमः" ॥ ६ ॥ इति ॥

## काम्येषु च प्रपदः ॥ ७ ॥

( मं० ब्रा० २।४।५ )

---

( १ ) "प्रापूरणे" ( अ०प० ) "आतोऽनुपसर्गेकः" ( पा० ३।२।३ ) इति के आतोलोपः ( पा० ६।४।६४ ) ॥

( २ ) "व्यवहिताश्च" ( पा०१।४।८२ ) इत्युपोव्यवहितस्य प्रयोगः ॥

( ३ ) अत्र जुह्वन्तमिति छान्दसोनुम् । ( पा० ६।३।१०९ ) वर्णागमरूपोनैरुक्तसमयेन । "नाभ्यस्ताच्छतुरि-" ( पा० ७।१।७८ ) इति नुमोभावस्य बोधनात ।

( ४ ) "प्रपन्नः शरणागत" इत्यभिधानम् ॥

( ५ ) "राधसाधसंसिद्धौ" ( दि० प० ) लोट् प्रार्थनायाम् । श्यन् । अत्रपदव्यत्यय आर्षः । ( पा० ३।१।८५ )

( ६ ) "ऋधुवृद्धौ" ( दि० प० ) लोट् पूर्ववत् ॥

( ७ ) "अचुगतौ" ( भ्वा उ० ) ततोऽसुन् ( उ० ४।१८८ ) एवमग्रेऽपि ।

( ८ ) अत्र "सास्यदेवता" ( पा० ४।२।२४ ) इत्यणादिवृद्धिः ॥ "देवताद्वन्द्वेच" ( पा० ६।३।२६ ) इति पूर्वपदस्यानङ् ॥

काम्येषु-होमवत्कर्म्मसु(१) । प्रपदश्च । "तपश्च तेजश्चे"त्यादि-"मामवन्तु" इत्यन्तोमन्त्रोऽपि जप्तव्यः पुरस्तादेव । मन्त्रोयथा—

"तपश्च तेतश्च श्रद्धा च ह्रीश्च सत्यञ्चाक्रोधश्च त्यागश्च धृतिश्च धर्म्मश्च ।

सत्त्वञ्च वाक् च मनश्चात्मा च ब्रह्म च तानि प्रपद्ये तानि माभवन्तु" ॥५॥

अस्यार्थः—'तपः' उपवासादि । 'तेजः' प्रकाशात्मकं 'श्रद्धा' कालुष्यापगमश्चित्तस्य धर्म्मः । 'ह्रीः'लज्जा । 'सत्यं' यथा-(स्थिता)ऽर्थवादित्वम् । 'अक्रोधः' प्रतिकूलविषयेऽपि मनसः प्रसादः । 'त्यागः' न्यायागतस्य धनस्य विधिनाविसर्गः । 'धृतिः' समौनस्यम् । 'धर्म्मः' यज्ञकर्म्म 'सत्त्वम्' आत्मनि प्रकाशात्मकोगुणः । 'वाक्' वचनम् । 'मनः' सङ्कल्पविकल्पकवृत्तिमानिन्द्रियविशेषः । 'आत्मा' क्षेत्रज्ञः(२) 'ब्रह्म' परन्तत्त्वम् । चकारः सर्वे परस्परापेक्षया समुच्चयार्थाः । 'तानि' तपःप्रभृतीनि 'प्रपद्ये' शरणंगच्छामि । अतः 'तानि' इमंयज्ञं कुर्वन्तं 'माम्' 'अवन्तु' रक्षन्तु ॥ ५ ॥ इति ॥

चन्द्रकान्तस्तु-द्विविधानि तावत्काम्यानि(कर्माणि)भवन्ति होमसंयुक्तानि अहोमकानिच । तत्र वैरूपाक्षो होमसंयुँक्तेष्वेव, प्रपदस्तुसर्वत्रैव स्यादिति । चशब्दएवकारार्थ इतितत्त्वकारः । अस्य प्रपदसमाख्याबीजन्तु वैरूपाक्षस्य प्रथमंपदंस्थानमस्येति । "पदंव्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यभिधानात् ॥ ७ ॥

अथेदानीम्प्रपदवैरूपाक्षयोर्जपप्रकारोऽभिधीयते—

**"तपश्चतेजश्चे"तिजपित्वा प्राणाना(३)यम्यार्थमना वैरूपाक्षमारभ्योच्छ्वसेत् ॥ ८ ॥**

"तपश्चतेजश्चे"-त्युक्तमन्त्रं ( प्रपदरूपं ) जपित्वा तत्परिसमाप्तौ प्राणान् आयम्य-नियम्यानुच्छ्वसन्नेव । अर्थमनाः । योऽर्थः साधयितुमिष्टस्तन्मनास्त ध्यायन् वैरूपाक्षं-विरूपाक्षोऽसीत्यादिपदघटितम् आरभ्य-आवृत्त्य । उच्छ्वसेत् । श्वासमुत्सृजेत् । तदुक्तं छन्दोगपरिशिष्टे—

"वैरूपाक्षंजप्तुमनाः प्राणानायम्य शक्तितः ।
भूराद्यारभ्य उच्छ्वसेदेवंसोममतेन तु ॥
मतेनाजातशत्रोस्तु जपित्वा भूर्भुवःस्वरोम्"

इति । क्षिप्रहोमोऽ-नुदितहोमः । एवञ्चात्र निषेधात्तयोर्विधिरन्यत्रायाति । "विशेषविधेःशेषनिषेधाभ्यनुज्ञाफलकत्वस्य तुल्यवित्तिवेद्यन्यायेन कल्पनात् ।

( १ ) अत्रमत्वर्थीयोऽच्प्रत्ययः । "अर्श आदित्वात्" ( पा० ५।२।१२७ )॥

( २ ) "क्षेत्रज्ञ आत्मा पुरुषः" इत्यमरः ॥

( ३ ) अत्र प्राणायाममायम्येति चन्द्रकान्तभाष्ये पाठः । प्राणानामायमनं समन्तात्संयमः प्राणायामः । "त्रिरभ्यस्तः पूरककुम्भकरेचकाख्यः प्राणायाम" इतिसन्ध्यासूत्राभ्यलक्षणः । तमायम्य कृत्वेतितदर्थः ॥

